॥ श्रीः ॥

# सर्वसिद्धान्तसारासारविवेचनम्

सर्वतन्त्रस्वतन्त्रश्रीमद्विजयीन्द्रतीर्थगुरुसार्वभौमविरचितम्

# SARVASIDDHANTASĀRĀSĀRA VIVECHANAM

BY

SRIMADVIJAYEENDRATEERTHA GURUSĀRVABHOUMA



PUBLISHED BY

**BRINDAVANAM OFFICE, MANTRALAYAM (P.O.)**

Pin. 518345, Yemmiganur Tq., Kurnool Dt. (A.P.)

॥ श्रीः ॥

# सर्वसिद्धान्तसारासारविवेचनम्

## सर्वतन्त्रस्वतन्त्रश्रीमद्विजयीन्द्रतीर्थगुरुसार्वभौमविरचितम्

प्रधानसंशोधकः

पण्डितराजः यम्. एस्. रङ्गनाथाचार्यः

निवृत्तद्वैतवेदान्तप्रधानाध्यापकः, श्रीचामराजेन्द्रसंस्कृतमहापाठशाला

बेङ्गळूरु

तथा

द्वैतवेदान्ताध्यापकानामध्यापकः श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्

मन्त्रालयः

उपसंशोधकः

विद्याभूषणम् यस्. वि. भीमभट्टः, एम्.ए.

तर्कशास्त्रप्रधानाध्यापकः, श्रीचामराजेन्द्रसंस्कृतमहापाठशाला

बेङ्गळूरु

प्रकाशनस्थानम्

बृन्दावनसंस्था, मन्त्रालयः

यम्मिगनूर् तालूकु, कर्नूल् जिल्ला, आन्ध्रप्रदेशः

SRI

# SARVASIDDHANTASĀRĀSĀRA VIVECHANAM

BY

SRIMADVIJAYEENDRATEERTHA
GURUSĀRVABHOUMA

EDITED BY

Asthana Vidwan, Panditaratnam, Vidyavisharada, Nyaya
Vedanta Choodamani, Vedanta Bhooshanam, Panditaraja,
Tarka, Sahitya, Vedanta Vidwan
Prof. M. S. RANGANATHACHAR
Retd. Senior Professor of Dwaita Vedanta and Principal
Sri Chamarajendra Samskrita College,
Fort, Bangalore-18
and
Senior Professor of Dwaita Vedanta, Sri Gurusarvabhouma
Samskrita Vidyapeetham, Mantralayam

SUB-EDITOR

Tarka Sahitya Vedanta Vidwan, Vidya Bhooshanam
Prof S. V. BHEEMABHATTA, M.A.
Professor of Tarka
Sri Chamarajendra Samskrita College, Fort, Bangalore-18

PUBLISHED BY

**BRINDAVANAM OFFICE, MANTRALAYAM (P.O.)**
Yemmiganur Tq., Kurnool Dt. (A.P.)

## श्रीमत्परमहंसपरिव्राजकाचार्येत्याद्यमन्दबिरुदवृन्दविभूषितानां श्रीमद्राघवेन्द्रगुरुसार्वभौमदिव्यपीठालङ्कृतानां श्री १००८ श्रीमत्सुजयीन्द्रतीर्थश्रीपादानामनुग्रहवचनम्

सर्वसिद्धान्तसारासारविवेचनं नाम ग्रन्थरत्नं सायणमाधवाचार्यरचितात् सर्वदर्शनसङ्ग्रहादाप्यतिशयितं योगितल्लजैराश्चर्यचरितैश्चतुरधिकशतग्रन्थरत्ननिर्माणनिपुणैश्चतुष्षष्टिकलापारङ्गतैः सर्वतन्त्रस्वतन्त्रैः परमपूज्यैः श्रीमद्राघवेन्द्रगुरुवरेण्यपरमगुरुभिः परैरजय्यैः श्रीमद्वेदान्तसाम्राज्यधुरन्धरैः श्रीमद्विजयीन्द्रतीर्थयतिसार्वभौमैः समारचितं श्रीमद्बादरायणविरचितश्रीमद्ब्रह्ममीमांसाशास्त्रीयसमयपादवन्मतान्तरप्रक्रियानिराकरणात्मकं सच्छास्त्रप्रतिपाद्यसत्सिद्धान्तस्थापनात्मकं सकलमुमुक्षूणां तत्त्वविमर्शनचतुराणां विपश्चिदपश्चिमानाञ्चात्युपादेयमित्यत्र नास्ति कश्चिद्विशयलेशोऽपि । इतःपूर्वमेतद्ग्रन्थरत्नस्यैकदेशो दशमः परिच्छेदो मुद्रापयित्वा प्राकाशि । सम्प्रत्येकादशपरिच्छेदपरिभूषितमिदं ग्रन्थरत्नं समग्रं मुद्रितं प्रकाश्यते । ग्रन्थस्यास्य मुद्रणोपयुक्तशोधनादिकर्मस्वस्माभिराज्ञप्ताः पण्डितप्रकाण्डाः मागडिरङ्गनाथाचार्याः नियोजितमेतत्कार्यं सर्वाङ्गसुन्दरमकार्षुरतस्तेभ्यो विद्वद्भ्योऽस्मदुपास्यश्रीमद्राघवेन्द्रगुर्वन्तर्गतश्रीमुख्यप्राणान्तर्गतश्रीमन्मूलरामचन्द्रः सुप्रीतः श्रेयांसि भूयांसि इतोऽप्यधिकं ज्ञानभक्तिवैराग्यादिकञ्च दद्यादित्याशास्महे ।

श्रीमन्मन्त्रालयक्षेत्रम्

इत्यनेकनारायणस्मरणानि

॥ श्रीः ॥

॥ श्री लक्ष्मीहयग्रीवाय नमः ॥

# प्रास्ताविकम्

अथ विमर्शकविचक्षणानां निर्मत्सराणां तत्त्वनिश्चयपक्षपातिनां सहृदयवरेण्यानां समक्षं किञ्चिदावेदयामः । तत्र तावत्सर्वतन्त्रस्वतन्त्रैश्चतुरधिकशतग्रन्थरत्ननिर्मापकैश्चतुष्षष्टिकलापारङ्गतैः श्रीमन्मध्वसिद्धान्तप्रतिष्ठापनधुरन्धरैरसाधारणप्रतिभापुञ्जरञ्जितैः श्रीमद्भिर्विजयीन्द्रतीर्थश्रीमच्चरणैश्चार्वाकादिदर्शनप्रक्रियाविमर्शनपुरस्सरं तेष्वपरिहार्यदोषोद्धाटनपूर्वकं सर्वसिद्धान्सारासारविवेचननाम्ना विख्यातं माधवाचार्यविरचितसर्वदर्शनसङ्ग्रहादप्यतिशयितप्रतिपादनपुरस्कृतं ग्रन्थरत्नं निरमायि ।

एकादशपरिच्छेदविलसितेऽस्मिन् ग्रन्थे रामानुजश्रीकण्ठमतनिरासो नाम दशमपरिच्छेदः इतः प्रागेव पृथक् ग्रन्थात्मना सम्मुद्र्य प्रकाशितः सर्वैस्तत्त्वबुभुत्सुभिः साक्षात्कृतश्च ।

सम्प्रत्येतद्ग्रन्थे पञ्चदशदर्शनप्रक्रियाविजृम्भिते ग्रन्थोपोद्धातप्रकरणे ग्रन्थकारैर्गाढतरविमर्शनदृष्ट्या "तत्रसमयास्त्रिविधाः, अवैदिकाः, वैदिकावैदिकाः, केवलवैदिकाश्च" इत्यादिना दर्शितः समयविश्लेषणप्रकारः तत्त्वजिज्ञासुजनचेतांस्याश्चर्यकलितानि कुरुते ।

असाधारणप्रतिभासम्पन्नानां श्रीमद्विजयीन्द्रतीर्थवरेण्यानामनितरसामर्थ्यादिनिरूपणावसरे श्रीराघवेन्द्रविजयमहाकाव्यनिर्मातॄणां वचनजातस्य स्मृतिपथमागतस्यात्रोदाहरणं सन्दर्भोचितं मन्यामहे ।

वाक्ये पदे पादविलोचनोक्तौ व्यासीयशास्त्रे च कृतान् प्रबन्धान् ।
आस्तां बुधः श्रोतुमशेषमेषामाख्याः समाख्याद्यदि पण्डितोऽसौ ॥

इति ॥ श्री.रा.विज. २ स.श्लो. २२

तन्त्रचतुष्टये श्रीमद्विजयीन्द्रगुरुसार्वभौमविरचितानां ग्रन्थरत्नानामतिबाहुल्यात्पुरुषस्य शतायुष्कत्वात् गुरोः सकाशात् श्रवणं पठनपाठनादिकञ्च कर्तुमशक्यम् । तत्तावत्तिष्ठतु नाम। तत्कृतप्रबन्धानां बहुत्वात्— तन्नामानि यः कोऽपि वा निःशेषं यदि वदेत् तर्हि स एव विद्वानिति श्रीविजयीन्द्रकृतप्रबन्धानां नामान्यपि वक्तुमशक्यान्येवेत्यभिप्रायं विद्वत्कुलावतंसमहाकविश्रीमन्नारायणाचार्याः श्रीराघवेन्द्रविजयमहाकाव्यकर्तारस्तदसाधारणमाहात्म्यमुद्घोषयंति । एतद्ग्रन्थमुद्रणावसरे प्राचीनाचार्यविरचितामुद्रितग्रन्थराशिषु सम्यक्परिशीलितेष्वपीमं ग्रन्थमसमग्रमेवोपलभामहे ।

हस्तलिखितपुस्तकेषु सम्प्रत्युपलभ्यमानेषु पाशुपतमतभङ्गः, शैवमतभङ्गः, समग्रसाङ्ख्ययोगमतभङ्गश्चेत्येतानि प्रकरणानि न संलक्ष्यन्ते । श्रीमन्मध्वमतप्रक्रियाप्रतिपादकान्तिमपरिच्छेदेऽपि ग्रन्थपातः संदृश्यते ।

अतोऽत्र न्यूनतापरिजिहीर्षया जिज्ञासुजनोपचिकीर्षया च पाशुपतमतभङ्गः, शैवमतभङ्गः, साङ्ख्ययोगमतप्रक्रियाप्रतिपादकभागः, अवशिष्टमध्वमतप्रक्रियाप्रदर्शकभागश्चेत्येतान् तत्तत्समयप्रतिपादकग्रन्थेभ्यः प्राक्तनेभ्यः संगृह्य वयं ग्रन्थकारसम्मतक्रममनुरुध्यात्र निर्दिशामः । भङ्गान्तरेष्वपि तत्तत्संदर्भोचिताः लघुटिप्पण्यो विलिखिताः । तत्तत्समयप्रतिपादकमूलग्रन्थस्थानि प्रमाणवाक्यान्यपि तत्तत्समयिसम्मतानि टिप्पणीभागे तत्र तत्र प्रदर्शितानि । मूलकोशेषु शैवमतखण्डनभागस्यानुपलम्भात् तत्स्थाने एतद्ग्रन्थकारैरेव विरचितं शैवसर्वस्वखण्डनं नाम ग्रन्थरत्नं समायोजि । एतद्ग्रन्थप्रतिपाद्यविषयाणामनुक्रमणिकाप्यध्येतॄणामुपकारायादावेव प्रदर्शिता । ग्रन्थस्यास्य संशोधनावसरे मुद्रणवेलायाञ्च संभाविताः प्रामादिका दोषाः यद्युपलभ्येरन् तर्हि ते सहृदयैः क्षन्तव्या इत्यभ्यर्थयामः ।

एतत्पुस्तकमुद्रणकार्यं सर्वाङ्गसुन्दरं कृतवतां प्रभामुद्रणालयाधिकारिणामुपकारं सादरमभिनन्दामः ।

एतन्मुद्रणोपयुक्तप्रतिकृतिनिर्माणे संशोधनादिकार्येषु चास्मान्नियोज्यानुगृहीतवतां तत्त्वज्ञानप्रसारणकार्यबद्धादराणां श्रीमद्राघवेन्द्रतीर्थगुरुसार्वभौमदिव्यवेदान्तसाम्राज्यपीठविभ्राजमानानामनवरतं श्रीमत्परिमलव्याख्याविजृम्भितश्रीमन्न्यायसुधाप्रवचनप्रोत्साहनतत्पराणां प्राचीनाचार्यविरचितामुद्रितग्रन्थरत्नमुद्रापणोत्साहसम्पन्नानां श्री १००८ श्री श्री सुजयीन्द्रतीर्थश्रीपादानां चरणनलिनयोः प्रणामसंततिं समर्प्य श्रीमद्राघवेन्द्रगुरुसार्वभौमान्तर्गतश्रीमद्भारतीरमणमुख्यप्राणान्तर्गतश्रीमन्मूलराम चन्द्रं श्रीमन्मूलगोपालकृष्णाभिन्नं भक्तिश्रद्धाद्यतिशयपुरस्सरं नामं नामं विरमामोऽस्मात्प्रसङ्गात् ।

इति

मागडि यस्. रङ्गनाथाचार्यः
प्रधानसंशोधकः

यस्. वि. भीमभट्टः
उपसंशोधकः

॥ श्रीः ॥

# सर्वसिद्धान्तसारासारविवेचनग्रन्थस्य विषयानुक्रमणिका

**Brindavanam of**

**Sri Sri Vijayeendra Teertha Sripadangalavaru**

**KUMBHAKONAM**



चतुरधिकशतग्रन्थरत्नप्रणेतारः सर्वतन्त्रस्वतन्त्राः
श्रीमद्विजयीन्द्रतीर्थगुरुसार्वभौमाः

भक्तानां मानसाम्भोजभानवे कामधेनवे ।
नमतां कल्पतरवे जयीन्द्रगुरवे नमः ॥

॥ श्रीः ॥

# सर्वसिद्धान्तसारासारविवेचनम् ।

## सर्वतन्त्रस्वतन्त्रश्रीमद्विजयीन्द्रतीर्थगुरुसार्वभौम-विरचितम् ।

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ।

॥ श्रीवेदव्यासाय नमः ॥ ॥ हरिः ॐ ॥

मह्यं प्रदद्यादनिशं मुकुन्द-
स्तत्त्वावबोधं सकलार्थदर्शी ॥
सङ्कल्पतो यस्य जगत्यनेके
मिथो विरुद्धाः समयाः प्रवृत्ताः ॥ १ ॥

सर्वतन्त्रस्वतन्त्रेण विजयीन्द्राख्यभिक्षुणा ।
क्रियते सर्वसिद्धान्तसारासारविवेचनम् ॥ २ ॥

मिथ्याज्ञाननिमित्तोऽयं बन्धस्तत्त्वधियं विना ।
न शाम्यतीति युक्तं तत्सारासारविवेचनम् ॥ ३ ॥

यस्य यस्य मते या या प्रक्रियासद्विरोधिनी ।
तस्य तस्य मते सा सा पुष्कलानूद्य दूष्यते ॥ ४ ॥

ननु तत्तत्समयिभिः स्वस्वसमयस्य सारत्वोपगमात् समयान्तराणामसारत्वोपगमाच्च कथं व्यवस्थेति चेन्न । सकललौकिकवैदिकप्रमाणसामञ्जस्यं यत्र तन्मतं सारम् । अतथाभूतं त्वसारमिति निर्णयसंभवेन व्यवस्थोपपत्तेः । ननु सकलप्रमाणसामञ्जस्यं स्वस्वसमय एवेति सर्वेषामपि निर्णयोऽस्तीति कथं व्यवस्थेति चेन्न । तत्त्वदर्शिनां मध्यस्थदृष्टीनां च सर्वेष्वपि मतेषु प्रमाणमूलत्वनिश्चयाभावेन प्रमाणानुसारेण व्यवस्थाया उपेयत्वात् । ब्रह्ममीमांसायां भगवता बादरायणेन न्यायाभासमूलानां बहूनां समयानां निराकृतत्वात् । मनुना च—

या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥

इति वेदविरुद्धा(मतानां)गमानामापातप्रतिपन्नवेदार्थमूलमतान्तराणां च पारलौकिकफलाभावस्य (फलशून्यत्वस्य) तामसपुरुषोपादेयत्वस्य प्रतिपादनाच्च । अतस्तत्त्वबुभुत्सुभिः समयेषु सारासारविवेचनं कर्तव्यम् । यथाहुः—

आवापोद्वापतः स्युः कति कति कविधीचित्रवत्तत्तदर्थेष्वानन्त्यादस्तिनास्त्योरनवधिकुहनायुक्तिकान्ताः कृतांताः । तत्त्वालोकस्तु लोप्तुं प्रभवति सहसा निस्समस्तान्समस्तान् पुंस्त्वे तत्त्वेन दृष्टे पुनरपि न खलु प्राणिता स्थाणुतादिः ॥ इति । (तत्त्वमुक्ताकलापे जडद्रव्यसरे श्लो. ५) ननु तत्त्वज्ञानजनकत्वेनाभिमतानां श्रुतिस्मृतिपुराणादीनां परस्परविरुद्धत्वेन न तैस्तत्त्वज्ञानं संपादयितुं शक्यम् । न च तर्कापरपर्यायमीमांसासहितैस्तैः तत्त्वज्ञानं संपादयितुं शक्यमिति वाच्यम् । तर्काणामप्रमाणत्वात् । तथा च पारमर्षं सूत्रम्—"तर्काप्रतिष्ठानादपी"ति (ब्र. सू. २–१–१२) श्रुतिरपि—नैषा तर्केण मतिरापनेया इति । (कठ. श्रु. १–२–९)

न च श्रुतिसूत्रयोः कुतर्कविषयत्वमिति शंकनीयम् । विशेषहेत्वभावादिति चेन्न । "श्रोतव्यो मन्तव्यः" (बृ. उ. ६–५–६) "सोऽन्वेष्टव्यः", "यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ।" "अथातो धर्मजिज्ञासा", (जै. सू. अ. १ अ. १ सू. १) अथातो ब्रह्मजिज्ञासा, (ब्र. सू. अ. १ अ. १ सू. १) इत्यादिश्रुतिस्मृतिसूत्रानुसारेण बुद्धिमत्पुरुषव्युत्पादितानां श्रुतिमूलतर्काणां प्रतिष्ठितत्वसिद्ध्या तत्सहितानां श्रुतीनां तत्त्वज्ञानजनकत्वसंभवात् । 'नैषा तर्केण मतिरापनेया' (कठ. श्रु. १-२-९) 'तर्काप्रतिष्ठानादपी'ति (ब्र. सू. अ. २ अधि. १ सू. १२) श्रुतिसूत्रयोः कुतर्कविषयत्वोपपत्तेश्च । अन्यथोदाहृतश्रुतिसूत्राणां व्याहतभाषित्वापत्तेः । अत एव "पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाःस्थानानि विद्यानां धर्मस्य च चतुर्दश" इति स्मृत्या मीमांसाया अपि धर्मप्रमितिहेतुत्वमेवोक्तम् । यथाहुः—ख्यातस्तर्कोऽप्रतिष्ठः स्वय-

मिह मुनिना सूत्रितं चैवमेतत्तस्मान्मीमांसमानैरपि निगमगतिः दुर्निरूपेति चेन्न। तर्कस्य ह्यप्रतिष्ठां कचिदभिदधता दर्शितो यस्तु पंथाः तत्संवादेन सर्वं न भवति शिथिलं शिक्ष्यमाणं सुधीभिः॥ इति। (मीमांसापादुका श्रीवेदान्ताचार्यविरचिता श्लो. २६) न चैवं 'शास्त्रज्ञानं बहुक्लेशं बुद्धेश्चलनकारणं' इत्यादिवचनविरोध इति वाच्यम्। तस्य तत्त्वज्ञानं बहुक्लेशसाध्यं न च शीघ्रं भवतीत्येवंपरत्वात्। उपदेशमात्रेण संशयनिवर्तकज्ञानाजननाच्च। यथाहुः—

'शास्त्रज्ञानं[1] च बुद्धेश्चलनजनकमित्युक्तिरन्याशया स्यात् नोचेद्रोचेत शंकाकबलितमनसे केवलः क्वोपदेशः॥" इति। तस्मात् तत्त्वज्ञानस्य सत्तर्कैः सुसंपादत्वात्—तर्काभासमूलानि मतान्तराणि निरसनीयानीति तत्त्वबुभुत्सुभिः समयेषु सारासारविवेचनमवश्यं कर्तव्यमिति॥

तत्र समयास्त्रिविधाः। अवैदिकाः, वैदिकावैदिकाः, केवलवैदिकाश्चेति। तत्रावैदिकमतान्यनेकविधानि। (लौ)लोकायतिकबौद्धार्हतपाशुपतादिभेदेन। एतेषां वेदप्रामाण्यानभ्युपगमादवैदिकत्वम्। वैदिकावैदिकानि च मतानि सांख्ययोगनैयायिकवैशेषिककौमारिलवैयाकरणाख्यानि। एतेषामाचारविषयकर्मसु प्रामाण्याभ्युपगमेऽप्यवश्याभ्युपगन्तव्यवेदान्तप्रामाण्यानभ्युपगमात् वेदान्तानां न्यायसिद्धार्थानुवादित्वोपगमाच्च मिश्रत्वम्। वैदिकमतानि च शङ्कर, यादव, (भट्ट) भास्कर, रामानुज, श्रीकण्ठमध्वाचार्यप्रवर्तितानि। एतेषां कर्मब्रह्मकाण्डरूपसर्ववेदप्रामाण्याभ्युपगमात्। यद्यपि शङ्करयादवभास्कररामानुजश्रीकण्ठप्रवर्तितानि मतानि क्वचित्क्वचित् वेदान्तानभिप्रेतार्थमूलतया वैदिकावैदिकेष्वेव निक्षेप्तुमुचितानि। तथापि तेषां कर्मब्रह्मकाण्डरूपसर्ववेदप्रामाण्याभ्युपगन्तृत्वाभिमानेन वैदिकतया तत्प्रवर्तितमतानामुपादानम्। यद्यपि च मृषावादिना

1. नास्तिक्यारम्भकत्वं मुनिभिरभिहितं यस्तु मीमांसकानां तत्प्रायो हैतुकेषु प्रविशति यदि वा पूर्वपक्षप्रवृत्तौ। (इति पूर्वार्धं)

श्रीकण्ठेन च योगाचारमतं पाशुपतमतं च औपनिषदीकृतमिति न तयोः पृथक् परिगणनं दूषणं वा युज्यते। तथाप्यौपनिषदत्वनिराकरणार्थं तयोः पृथक् परिगणनं दूषणं च युज्यते। मध्वाचार्यप्रवर्तितं तु मतं श्रुत्यभिप्रेतार्थमूलं सकलप्रमाणाविरुद्धं चेति तदेव तत्त्वबुभुत्सुभिः मुमुक्षुभिश्च परिग्राह्यम्। यथाचैतत्तथाग्रे स्पष्टीकरिष्यते। न चापस्तंबादिसूत्राणामिवोदाहृतसमयानां विकल्पेन प्रामाण्यम्। वस्तुनि विकल्पायोगात् तदुक्तम्—

कर्तव्यानां विकल्पे मुनिवचनमिते धर्मतैवोभयत्र[1]।

व्याख्याभेदाद्विकल्पेत्वनवगतिभवे शिष्टमेवैकशेष्यम्॥ इति।

(मीमांसापादुका श्लो. २८)

## ॥ अथ चार्वाकमतभङ्गः ॥

तत्र लोकायतमतमादौ निराक्रियते। लौकायतिकाः (चार्वाकाः)[2] खल्वेवमाहुः—

प्रत्यक्षमेव प्रमाणम्। नानुमानादि। तत्र यादृच्छिकसंवादितया प्रामाण्याभिमानमात्रम्। प्रमाणत्वे वा तस्य प्रत्यक्ष एवान्तर्भावः।

---

1. धर्मतोवोभयत्र (पा)

2. चारू रमणीयो वाक उक्तिः यस्य सः चार्वाकः। लोकायतमिति। लोके आयतं प्रसृतमित्यर्थः। नास्तिकशिरोमणिश्चार्वाकः बृहस्पतिशिष्यः। चार्वाकवचनस्य परिणामे क्लेशदायित्वेऽपि श्रवणवेलायां श्रोतॄणां मनोरञ्जकत्वाद्रमणीयत्वम्। उपदेशं विनापि प्रायः स्वभावत एव तन्मतानुवर्तिनो लोकाः संदृश्यन्ते। चार्वाकसम्प्रदायस्य प्रवर्तको बार्हस्पत्यसूत्रकारो बृहस्पतिः प्रचारकश्च तच्छिष्यश्चार्वाकः। अयं सम्प्रदायो लोकायत (लौकायतिक) नाम्ना विख्यातो वर्तते। चार्वाकस्य जन्म क्रिस्ताब्दात् पूर्वं २४३६ तमे वर्षे वैशाखकृष्णामातिथौ बेटद्वारिकायां बभूवेति वदन्ति। अस्य पितेन्दुकान्तो माता च स्रग्विणी॥

तस्य पृथक् प्रमाणत्वेऽपि लोकसिद्धवह्न्याद्यनुमानमेव प्रमाणम् । नातीन्द्रियार्थविषयम् । तस्यैवासत्त्वात् । विषनिर्हरणादिमंत्रयंत्रचेष्टादिफलसंवादाश्चौषधयः सूर्यचन्द्रकान्तादिन्यायेन यथादर्शनं व्यवस्थाप्या इति न तद्दर्शनातीन्द्रियार्थसिद्धिः । पृथिव्यप्तेजोवायव इति चत्वार्येव तत्त्वानि । आकाशस्य तत्त्वान्तरत्वेऽपि न दोषः । पृथिव्यादेरिव तस्यापि प्रत्यक्षसिद्धत्वात् । अर्थकामावेव पुरुषार्थः । न तु धर्मो मोक्षो वा । धर्मत्वेनाभिमतस्याग्निहोत्रादेः कायक्लेशरूपतया दुःखसाधनत्वेनापुरुषार्थत्वात् । अग्निहोत्रादिना देहदेशान्तरभोग्यमतिशयितं स्वर्गादिफलं भविष्यतीति चेन्न । देहातिरिक्तस्य तादृशस्वर्गादिफलभोक्तुः तादृशफलस्य च अप्रामाणिकत्वात् । निरन्तरयथेष्टकामिनीसंभोगाद्यतिरेकेण (रिक्तस्य) स्वर्गशब्दार्थस्याभावात् । तस्य दृष्टोपायान्तरेणैव सम्पादनीयत्वाच्च । एवं च निरन्तरयथेष्टकामिनीगमनादेरधर्मत्वं न युक्तम् । तस्य सुखसाधनत्वात् । सुखसाधनस्यैव धर्मत्वोपगमाच्च । सुखसाधनस्य यथेष्टकामिनीगमनादेः दुःखसाधनत्वं दुःखसाधनस्य वा अग्निहोत्रादेः सुखसाधनत्वमिति वचनस्य स्वस्वहृदयमनारूढस्य बालिशोपच्छन्दनमात्ररूपत्वेन वञ्चनार्थतया विशिष्य परीक्षकहृदयेष्वनारोहाच्च । तस्मादग्निहोत्रादीनां न पारलौकिकश्रेयःसाधनत्वं किंतु ऐहिकजीवनादिहेतुत्वमिति युक्तम् । तथाचाऽऽभाणकः[1] ।

---

1. आभाणकः लोकोक्तिविशेषः । अग्निहोत्रमिति । अग्निहोत्रपदेन निखिलान्यग्निसाध्यानि श्रौतस्मार्तकर्माण्यत्र विवक्षितानि । त्रयो वेदाः ऋग्यजुःसामनामानो वेदाः । अथर्ववेदस्तु तदन्तर्गतो ज्ञेयः । तस्य पार्थक्येन चत्वारो वेदा इति लोकप्रसिद्धिः । एते सर्वे वेदाः भण्डधूर्तनिशाचरैः स्वयं विरचिता अपि लौकिकानामज्ञानां विशेषतः श्रद्धाजननायापौरुषेयत्वेन स्वतः प्रमाणत्वेन च प्रसिद्धिं प्रापिता इति चार्वाकाः प्रतिपादयन्ति । त्रिदण्डशब्देन काम्यकर्मत्यागरूपः सन्यासोऽत्र विवक्षितः । भस्मगुण्ठनं शरीरे भस्मलेपः ॥ बुद्धिपौरुषहीनानामिति ॥ बुद्धिमन्तो हि पुरुषाः स्वकीयबुद्धिवैभवेन

अग्निहोत्रं त्रयो वेदाः त्रिदण्डं भस्मगुंठनम् ।
बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः ॥ इति ।

(जीविका धातृनिर्मिता)

एवं न मोक्षोऽपि पुरुषार्थः । देहस्यैवाऽऽत्मतया तन्नाशातिरेकेण तस्याभावात् । स्थूलोऽहमिति स्थौल्यविशिष्टदेहस्यैवात्मत्वानुभवात् । तदतिरिक्तस्याऽऽत्मनोऽननुभवाच्च । न च 'स्थूलोऽहं' इत्ययं भ्रमः । बाधकाभावात् । नहि 'नाहं स्थूलः' इति कस्यचित् कदाचिदपि बाधकप्रतीतिरस्ति । बाधकाभावेऽपि भ्रमत्वे 'वह्निरुष्णः' इत्यादिप्रत्ययस्यापि भ्रमत्वापातात् । न च 'स्थूलोऽहं'— इत्यस्य 'स्थूलशरीरविशिष्टोऽह'मित्यर्थ इति युक्तम् । एवं प्रतीतिं व्याख्यातवतः उन्मत्तवदुपेक्षणीयत्वात् । "मम शरीरं" इत्याद्यनुभवस्य च "शिलापुत्रकस्य शरीरं" इतिवत् त्वन्मते "ममात्मे"तिवच्चोपपन्नतया ततो देहातिरिक्तात्मसिद्ध्ययोगाच्च । न च चैतन्याख्यविकारस्य पृथिव्या-

---

सामाद्युपायैः द्रव्यं सङ्गृह्य स्वजीविकां सम्पादयन्ति । पौरुषसम्पन्नास्तु स्वपराक्रमेण जीविकां सम्पादयन्ति । तादृशबुद्धिविहीनाः पराक्रमरहिताश्च जना नयेन पौरुषेण वा जीविकां सम्पादयितुमसमर्था अज्ञलोकवञ्चनातिरिक्तमुपायान्तरमपश्यन्तोऽग्निहोत्राद्यनेककर्मजालं लोके प्रसार्य जनान्कर्मतरङ्गतरङ्गितमानसान्विधाय पश्यतोहराश्चैते वैदिकंमन्या धूर्तबका लोकेभ्यो विपुलद्रव्यमुपलभ्य स्वजीविकां सम्पादयन्तीति चार्वाकाभिप्रायः। बृहस्पतिरिति ॥ बृहस्पत्याचार्य इत्यर्थः ॥ देवगुरुर्बृहस्पत्याचार्य एवास्य मतस्य प्रवर्तक इति प्रसिद्धिर्वर्तते । तदुक्तं पद्मपुराणे पार्वतीं प्रतीश्वरवाक्यम्——

"शृणुदेवि प्रवक्ष्यामि तामसानि यथाक्रमम् ।
येषां श्रवणमात्रेण पातित्यं ज्ञानिनामपि ॥
प्रथमं हिं मयैवोक्तं शैवं पाशुपतादिकम् ।
मच्छक्त्यावेशितैर्विप्रैः सम्प्रोक्तानि ततःपरम् ॥
धिषणेन तथा प्रोक्तं चार्वाकमतिगर्हितम्" ॥ इति ॥

दिष्वयोगेन तदाश्रयातिरिक्तात्मसिद्धिरिति युक्तम् । कि(ण्वा)[1]द्यादौ हरिद्राचूर्णादौ च संसर्गावस्थायामेव मदशक्तिरागाद्युत्पत्तिवद्देहाकार-परिणतेष्वेव पृथिव्यादिषु चैतन्योत्पत्तौ[2] बाधकाभावात् । पार्थिवत्वा-विशेषेऽपि कण्टकादावेव तैक्ष्ण्यं नान्यत्रेति व्यवस्थादर्शनाच्च । प्रतिमा-जल्पनपक्ष्म[3]संमीलनादिवदभिवदनोच्छ्वासनिःश्वासनिमीलनोन्मीलनादि-व्यवहारोपपत्तेश्च । छित्वाऽधिरोपिते शाखादौ उपचयादिदर्शनेन तद्वद्देहोपचयाद्युपपत्तेश्च । अतो "यावज्जीवं सुखं जीवेत्" इत्याद्युप-देशवत् सकलजनहृदयसंवादितया सर्वलोकहिताय प्रवृत्तं लोकायत-मतमेव[4] प्रामाणिकं सर्वोपादेयमिति ॥

---

1. तण्डुलादिद्रव्यकृतसुराबीजादौ

2. चैतन्यं ज्ञानम्

3. वर्त्म इति पाठान्तरम्

4. लोकायतमतमेवेति ।। अङ्गनालिङ्गनादिजन्यं सुखमेव पुरुषार्थः । लोके कण्टकादिजन्यं दुःखमेव नरकः । रौरवमहारौरववह्निवैतरणीकुम्भी-पाकादिः कश्चन नास्त्येव । लोके प्रजानां नियन्तृत्वेन दृष्टो राजैव परमेश्वरः । चेतनाचेतनात्मकजगदुत्पत्त्यादिकर्तान्य ईश्वरः कश्चिन्नास्ति । जगतः उत्पत्ति-स्थित्यादिकं स्वाभाविकमेव । सर्वं स्वभावत एव परिणमति । जन्मान्तरन्तु नास्त्येव । देह एवात्मा । देहविनाशो मरणमेव मोक्षः । ज्ञानान्मुक्तिर्नाभ्युप-गम्यते । पृथिवी, जलं, अग्निः, वायुरिति चत्वारि भूतानि । आकाशन्तु नैवाङ्गीक्रियते । मदजनकेभ्यः समेतेभ्यः किण्वादिभ्यो द्रव्येभ्यो मदशक्तिवत् शरीररूपेण परिणतेभ्यः पृथिव्यादिभ्यः चतुर्भ्यो भूतेभ्यश्चैतन्य(ज्ञानं)मुप-जायते । अहं स्थूलः, अहं कृशोऽस्मीति सामानाधिकरण्यव्यवहारात् देहे-स्थौल्यादिसम्बन्धात् शरीरमेवात्मा । मम शरीरमिति व्यवहारस्तु राहोः शिरोमात्ररूपत्वेऽपि राहुः शिर इति वक्तव्ये राहोः शिर इतिवदौपचारिकः । प्रत्यक्षमेकमेव प्रमाणम् ।

तदेतत्सर्वं समग्राहि —

अङ्गनालिङ्गनाज्जन्यसुखमेव पुमर्थता ।
कण्टकादिव्यथाजन्यं दुःखं निरय उच्यते ॥
लोकसिद्धो भवेद्राजा परेशो नापरः स्मृतः ।
देहस्य नाशो मुक्तिस्तु न ज्ञानान्मुक्तिरिष्यते ॥
अत्र चत्वारि भूतानि भूमिवार्यनलानिलाः ।
चतुर्भ्यः खलु भूतेभ्यश्चैतन्यमुपजायते ॥
किण्वादिभ्यः समेतेभ्यो द्रव्येभ्यो मदशक्तिवत् ।
अहं स्थूलः कृशोऽस्मीति सामानाधिकरण्यतः ॥
देहः स्थौल्यादियोगाच्च स एवात्मा न चापरः ।
मम देहोऽयमित्युक्तिः संभवेदौपचारिकी ॥ इति ॥

सर्वं चैतच्चार्वाकमतप्रवर्तकाचार्येण बृहस्पतिनाप्युक्तम् —

न स्वर्गो नापवर्गो वा नैवात्मा पारलौकिकः ।
नैव वर्णाश्रमादीनां क्रियाश्च फलदायिकाः ॥
अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम् ।
बुद्धिपौरुषहीनानां जीविका धातृनिर्मिता ॥
पशुश्चेन्निहतः स्वर्गं ज्योतिष्टोमे गमिष्यति ।
स्वपिता यजमानेन तत्र कस्मान्न हिंस्यते ॥
मृतानामपि जन्तूनां श्राद्धं चेत्तृप्तिकारणम् ।
निर्वाणस्य प्रदीपस्य स्नेहः संवर्धयेच्छिखाम् ॥
गच्छतामिह जन्तूनां व्यर्थं पाथेयकल्पनम् ।
गेहस्थकृतश्राद्धेन पथि तृप्तिरवारिता ॥
स्वर्गस्थिता यदा तृप्तिं गच्छेयुस्तत्र दानतः ।
प्रासादस्योपरिस्थानामत्र कस्मान्न दीयते ॥
यावज्जीवेत् सुखं जीवेत् ऋणं कृत्वा घृतं पिबेत् ।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः ॥

अत्रोच्यते—

न तावत्प्रत्यक्षमेकमेव[1] प्रमाणम् । अनुमानादिनाऽपि ज्ञानोत्पत्तेरनुभवसिद्धत्वात् । तदुत्पन्नज्ञानस्यावधारणरूपत्वात् । बाधक-

---

यदि गच्छेत्परं लोकं देहादेष विनिर्गतः ।
कस्माद्भूयो न चायाति बन्धुस्नेहसमाकुलः ॥
ततश्च जीवनोपायो ब्राह्मणैर्विहितस्त्विह ।
मृतानां प्रेतकार्याणि नत्वन्यद्विद्यते क्वचित् ॥
त्रयो वेदस्य कर्तारो भण्डधूर्तनिशाचराः ।
जर्भरीतुर्फरीत्यादि पण्डितानां वचःस्मृतम् ॥
मांसानां खादनं तद्वन्निशाचरसमीरितम् ॥ इति ॥

तदुक्तं विष्णुपुराणे---

निहतस्य पशोर्यज्ञे स्वर्गप्राप्तिर्यदीष्यते ।
स्वपिता यजमानेन तदा किं न विहन्यते ॥
तृप्तये जायते पुंसो भुक्तमन्येन चेत्ततः ।
दद्याच्छ्राद्धं श्रमायान्नं न वहेयुः प्रवासिनः ॥ इति ॥
वि.पु. ३.१८.१५

एवं तत्रैव यज्ञादिकर्मविषयेऽप्युक्तम्----

नैतद्युक्तिसहं वाक्यं हिंसा धर्माय नेष्यते ।
हवींष्यनलदग्धानि फलायेत्यर्भकोदितम् ॥
यज्ञैरनेकैर्देवत्वमवाप्येन्द्रेण भुज्यते ।
सस्यादि च समित्काष्ठं तद्वरं पत्रभुक्पशुः ॥ इति ॥
वि.पु. ३.१८.८२.८३

तस्मात्सर्वेषां प्राणिनामनुग्रहार्थं चार्वाकमतमाश्रयणीयमिति रमणीयम् ॥

1. चार्वाकस्य न वाक् चार्वी कुर्वीतात्मवधं किल ।
अक्षैकमानता वाक् किं रक्षेदात्मप्रमाणताम् ॥
(युक्तिमल्लिका गुण. सौ. श्लो. १३२)

प्रत्ययादर्शनाच्च । "विशेषेऽनुगमाभावात्सामान्ये सिद्धसाधनात् । तद्वचोऽनुपपन्नत्वादनुमानकथा[1]कुतः" इत्यादिहेतूनां प्रामाण्याप्रामाण्ययोर्व्याहतत्वाच्च । किंचानुमानादेरप्रामाण्ये प्रत्यक्षस्याप्यप्रमाणत्वं स्यात् । विशेषहेत्वभावात् । अनुमानादाविव प्रत्यक्षेऽपि क्वचित् बाधितत्वदर्शनेन प्रत्यक्षमात्रप्रामाण्याङ्गीकारायोगाच्च । किञ्च प्रत्यक्षस्येवानुमानादेरपि बाधकाभावे प्रामाण्यस्याङ्गीकर्तव्यत्वाच्च । भोजनादेः तृप्तिसाधनत्वादिकमनुमायैव प्रवृत्तिदर्शनेनानुमानप्रामाण्यस्य दुर्वारत्वाच्च। प्रत्यक्षाविषयं तं तमर्थमाप्तवाक्यान्निश्चित्य सर्वेषां निश्शङ्कप्रवृत्तिदर्शनेन प्रत्यक्षमेकमेव प्रमाणमित्यंगीकारायोगाच्च। किंच प्रत्यक्षमात्रप्रामाण्याभ्युपगमे कथं चार्वाकसमयमुपाश्रित्यार्थो निश्चेयः । कथं वा तन्मूला प्रवृत्तिर्निवृत्तिर्वा । अनुमानादेः संभावकत्वे प्रत्यक्षस्यापि तथात्वापातात् । किंचान्वयव्यतिरेकानुविधायिषु दृष्टार्थमन्त्रौषधज्यौतिषनिमित्तशास्त्रेषु संवाददर्शनेन पारलौकिकार्थविषयेष्वपि शास्त्रेषु कालान्तरभाविसंवादमादायैव[2] प्रामाण्यमंगीकरणीयं तत्सामान्यादितरेषु तथात्वमिति न्यायात् । किंचानुमानादेः प्रत्यक्षान्तर्भावो न युक्तः। पर्वतादौ धूमादिकं दृष्ट्वा गृहं गतस्य तत्र व्याप्तिं स्मरतः पुंसो वह्न्याद्यनुमितिदर्शनात् विदग्धादेरपि च स्वरादिना पुत्राद्यनुमितिदर्शनाच्च। अंधादेरपि आप्तवाक्येन तत्र तत्र प्रवृत्तिदर्शनाच्च। न हि तत्र प्रत्यक्षान्तर्भावसंभावनाऽस्ति । न च मानसप्रत्यक्षं तत्रेति युक्तम् । तत्र मानसत्वानभ्युपगमात् । मनसो बहिरस्वातन्त्र्याच्च । व्याप्तिज्ञानाद्यन्वयव्यतिरेकानुविधायिनोऽपि विज्ञानस्य मानसप्रत्यक्षरूपत्वाभ्युपगमे चक्षुराद्यन्वयव्यतिरेकानुविधायिज्ञानस्यापि तथात्वापाताच्च। एवमनुमानागमयोरपि प्रामाण्ये सिद्धे तदधीनानि भूतचतुष्टयातिरिक्तानि तत्त्वान्तराण्यपि अंगीकर्तव्यानि । अनुमानागमसिद्धानामपि तत्त्वांतराणां प्रतिक्षेपायोगात् । अन्यथा प्रत्यक्षसिद्धार्थानामप्यपलापः स्यात् । न चानुपलब्धिमात्रेण भूतचतुष्टयातिरिक्ततत्त्वांतराभावः शंकनीयः ।

---

1. अनुमानकथाङ्कुरः (पा) 2. संपदमादायैव (पा)

योग्यानुपलब्धेरेवाभावनिश्चायकत्वात् । अतीन्द्रियविषये योग्यानुपलब्धेरेवाभावात् । योग्यायोग्यविभागं विना अनुपलब्धिमात्रतः तत्त्वान्तराभावोक्तौ गृहात् बहिर्निर्गतस्य चार्वाकस्य गृहे विद्यमानपुत्रदारादीनामप्यभावप्रसंगेन व्याकुलत्वप्रसंगात् । किं च नीतिशास्त्रबलेनार्थकामयोरेव पुरुषार्थत्वमित्यनुपपन्नम् । तस्य धर्माविरुद्धयोरेव तयोः पुरुषार्थत्वप्रतिपादनपरत्वात् । "असाधुभ्योऽर्थमादाय साधुभ्यः संप्रयच्छति"। ' धर्माविरुद्धो[1] भूतेषु कामोऽस्मि भरतर्षभ" (भ.गी. अ. ७ श्लो. ११)। इत्यादि स्मृत्यनुसारात् धर्मविरुद्धयोस्तयोरपुरुषार्थत्वस्य प्रेक्षावत्पुरुषसंमतत्वाच्च ।

न च गोत्वादिजातिवत् ब्राह्मणत्वादिजातीनामनुपलंभेन तन्निमित्तकं शास्त्रमप्रमाणमिति वाच्यम् । अबाधितानादिपरिग्रहपरंपरया आगोपालं प्रसिद्धानां ब्राह्मणत्वादिजातीनां अपह्नवायोगात् । गन्धविशेषादिलिंगसहकृतप्रत्यक्षेण घृतादिजातीनामिव विशिष्टमातापितृजन्यत्वादिलिंगविशेषसहकृतप्रत्यक्षेण ब्राह्मणत्वादिजात्युपलंभोपपत्तेश्च । अश्वगर्दभादिसंसर्गेण खरादिविजातीयोत्पत्तिवत् ब्राह्मणादिविजातीयसंसर्गेणानुलोमप्रतिलोमादिविजातीयोत्पत्तौ बाधकाभावाच्च ।

किं च शरीरमात्मेत्यनुपपन्नम् । "सुखमहमस्वाप्समि"ति सुषुप्तौ "गजादिकमद्राक्षमि"ति स्वप्ने "योऽहं बालः स एवेदानीं स्थविरः" इति जाग्रद्दशायां च देहाद्यतिरिक्तस्यैव आत्मनः परामर्शात् । "मम[2] देहः" इति शरीरात्मनोर्भेदानुभवात् । "अहं देहः" इति

---

1. भूतेषु धर्माविरुद्धो यः कामः सोऽस्मीत्यर्थः ।
   बलं बलवतां चाहं कामरागविवर्जितं इति पूर्वार्धम् ।।

2. देहादन्योऽनुभवत आत्मा भाति शरीरिणाम् ।
   मम देह इति व्यक्तं ममार्थ इतिवत्सदा ।।
   (अनु. व्या. अ. २, पा. २)

   कस्यचित् कदाचिदपि देहोऽहमिति प्रमाभावात् ।
   (न्या.सु. अ. २, पा. २ अधि. ३)

कदापि कस्यापि प्रतीत्यभावात् । "स्थूलोऽहं" "गौरोऽहं"मिति प्रतीतेश्च उष्णं जलमित्यादिप्रतीतिवत् परम्परासंबन्धावगाहित्वोपपत्तेः । सर्वशरीरानुसन्धातुरात्मनः तद्भिन्नत्वावश्यंभावाच्च ।

किंचार्थकामातिरेकेण धर्मापवर्गावपि पुरुषार्थावभ्युपगन्तव्यौ । अन्यथा त्वत्सिद्धान्तस्य विषयप्रयोजनशून्यतया अनुपादेयत्वमेव स्यात् । न च दृष्टं धनादि तत्प्रयोजनम् । तेन तदसिद्धेः । वार्ता[1]दिनापि तत्सिद्धेश्च । न च यथेष्टकामिनीसंभोगस्तत्प्रयोजनम् । तस्य लोकबहिष्कारहेतुत्वेनापुरुषार्थत्वात् । न च धर्माद्यभावबोधनद्वारा तत्सिद्धान्तस्य लोकोपकारः प्रयोजनम् । धर्माद्यभावज्ञाने परस्परहिंसादेरेव प्राप्ततया तच्छास्त्रस्यापकारिताया एव प्राप्तेः । उपकारस्यापि स्वतः प्रयोजनत्वाभावेन दूरे गत्वा तत्साध्यस्यापि धर्मापवर्गरूपप्रयोजनान्तरस्यावश्यांगीकर्तव्यत्वाच्च । दुर्मार्गेण प्रवर्तमानस्य लोके बहिष्कारदर्शनाच्च । एवं धर्मादेरेव तद्विषयत्वं वाच्यम् । केवलार्थकामयोः शास्त्रप्रतिपाद्यत्वासंभवात् । अतः चार्वाकेणापि स्वसिद्धान्तस्य सविषयत्वसप्रयोजनत्वसिध्यर्थं धर्मादिकमवश्यमभ्युपेयमिति । तदेतत्सर्वमभिसन्धायोक्तं भगवता बादरायणेन ॐ अभ्युपगमेऽप्यर्थाभावात्[2] ॐ (ब्र. सू. २-२-६)

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां श्रीमत्सुरेन्द्रतीर्थपूज्यपादानां शिष्येण विजयीन्द्रभिक्षुणा विरचिते सर्वसिद्धान्तसारासारविवेचने चार्वाकमतभङ्गः प्रथमः ॥

---

1. कृष्यादिजीविकादिनापि

2. अत्र चार्वाकमतं निरस्यते । नेत्यस्ति । अर्थशब्दो विषयप्रयोजनपरः । त्वदीयशास्त्रस्य सिद्धान्तत्वमभ्युपगम्यते न वा । अंत्येऽस्मदिष्टम् । आद्ये विषयप्रयोजनवत्त्वं नोपेयते उतोपेयते । नाद्यः । अभ्युपगमेऽपि सिद्धान्तत्वाभ्युपगमेऽपि तद्व्यापकयोरर्थयोः विषयप्रयोजनयोरभावाभ्युपगमाद्व्याहत्यापातात् । नान्त्यः । दृष्टादृष्टयोः विषयप्रयोजनयोरभावान्न युक्तं तन्मतमिति सूत्रार्थः ॥

# ॥ अथ सौगतमतभङ्गः ॥

**इदानीं सौगतमतं निराक्रियते ॥**

**तत्र [1]सौगताश्चतुर्विधाः। वैभाषिकाः सौत्रान्तिकाः, योगाचाराः, माध्यमिकाश्चेति ॥**

---

1. सौगताः सुशोभनं गतं ज्ञानं अस्य सुगतः। प्रशस्ता बुद्धिर्यस्य सः बुद्धः। तथा-सम्यग्गतं ज्ञानमस्येति तथागतः। यथा मुनयो मोक्षं गताः तथा मोक्षं गत इति वा तथागतः। भगवान् बुद्धः एक एव बोधयिता। तं बुद्धाख्यं देवमनुसरन्तः तच्छिष्याः बौद्धाः। तेषां दर्शनं बौद्धदर्शनम्। सुगतोऽपि बुद्ध एव तच्छिष्याः सौगता इत्युच्यन्ते। ते च वैभाषिकाः सौत्रान्तिकाः यौगाचाराः माध्यमिकाश्चेति चतुर्विधाः प्रसिद्धाः। बोधयितुर्बुद्धस्य गुरोरेकत्वेऽपि बोद्धव्यानां बुद्धितारतम्यात् चातुर्विध्यम्। तेषु **वैभाषिकाः** बाह्यार्थप्रत्यक्षत्ववादिनः सर्वास्तित्ववादिनश्चेति कथ्यन्ते। अनुभवानुसारेण बाह्यार्थाः यथा घटपटादयोऽभ्युपगम्यन्ते तथैव प्रत्यक्षबलात्तेषां प्रत्यक्षत्वमप्यभ्युपगन्तव्यम्। एवं बाह्येष्वर्थेष्वान्तरेषु च प्रत्यक्षेषु सत्सु भगवान् गुरुर्यत्कांश्चित्प्रथमं सर्वं शून्यमित्युपदिदेश ततश्च कांश्चिद्विज्ञानमेव सदिति कांश्चिच्चोभयं बाह्यमान्तरं च सदित्यभिप्रेत्यावस्थितान्विज्ञेयमनुमेयं चेति सेयं बुद्धगुरोर्विरुद्धा भाषेति ब्रुवाणा वैभाषिकाख्यया विख्याताः ॥

**सौत्रान्तिकाः**—सूत्रान्तं पृच्छन्ति ये ते सौत्रान्तिकाः। एते बाह्यार्थानुमेयत्ववादिनः। बाह्यार्थस्य नीलादेरसत्वे विज्ञानमात्रस्यास्तित्वं वक्तुमशक्यम्। तस्माद्बाह्यार्थोऽप्यवश्यमभ्युपगन्तव्य एव। गुरुणा तु भवतु नाम बाह्यार्थः परन्तु स च न प्रत्यक्षः किन्त्वनुमेय इत्युपदिष्टे कियत्पर्यन्तं सूत्रं भवेदिति पृष्टत्वात्ते सौत्रान्तिकसंज्ञया प्रसिद्धाः सौत्रान्तिकाः। **योगाचारास्तु** गुरूक्तं सर्वं क्षणिकं क्षणिकं, सर्वं दुःखं दुखं, सर्वं स्वलक्षणं स्वलक्षणं, सर्वं शून्यं शून्यमिति भावनाचतुष्टयं बाह्यार्थशून्यत्वं चाङ्गीकृत्य, कथं पुनः सर्वस्य शून्यत्वमवगन्तुं शक्यम्. सर्वस्यापि शून्यत्वे विज्ञानस्यापि शून्यत्वापत्त्या

**तत्र वैभाषिकाः प्राहुः —**

**गन्धरसरूपस्पर्शाः सूक्ष्माः क्षणध्वंसिनो निर्बाधाः परमार्थसन्तः। इतरत् स्तम्भमहीरुहादि कृत्स्नं जगत् तत्र कल्पितम्। वेदनं तु स्वप्नज्ञानवत् साकारम्। अर्थार्पितो वेदनाकार एव प्रमाणम्। [1]नान्यत्। तत्र बाह्यपदार्थाः प्रत्यक्षसिद्धाः। वेदनेषु अर्थाकारे समर्पिते तेनाकारेण बाह्यवस्त्वनुमितिरिति सौत्रान्तिकं मतम्। अन्यत्समानम्॥**

**योगाचारस्तु बाह्यपदार्थानां ज्ञानोपरागं विना भानायोगात् ज्ञानस्यापि अर्थोपरागं विना भानादर्शनात् सहोपलम्भनियमेन सर्वस्य ज्ञानात्मकत्वे स्थिते स्तम्भादिभेदबुद्धीनां बाधितविषयत्वात् विज्ञानव्यतिरिक्तं सर्वं मिथ्येत्याह॥**

---

जगदान्ध्यं प्रसज्येत। अतो बाह्यार्थस्य शून्यत्वमस्तु। शिष्येण तु द्वयं करणीयमस्ति योगः आचारश्चेति। तयोर्मध्येऽज्ञातार्थस्य ज्ञानायाक्षेपो योग इत्युच्यते। गुरूक्तस्यार्थस्याङ्गीकरणमाचारश्चेति निगद्यते। एवञ्च यैः शिष्यैर्गुरूक्तं भावनाचतुष्टयं बाह्यार्थशून्यत्वञ्चाभ्युपगम्य सर्वशून्यत्वविषये आक्षेपः कृतस्ते योगाचारा इति प्रसिद्धिं गताः॥

माध्यमिकास्तु मध्यमबुद्धित्वादनेन नाम्ना प्रसिद्धिं प्रापुः। गुरुणा बुद्धेन स्वशिष्येभ्यः सर्वं शून्यमित्युपदेशे कृते ये च शिष्याः गुरूक्तं सर्वमेव यथार्थं मन्यमानाः न कस्मिन्नप्यंशे आक्षेप कृतवन्तस्त एव मध्यमबुद्धित्वान्माध्यमिकाः। भगवता गुरूणा प्रथमं सर्वं क्षणिकं क्षणिकमित्युपदिश्य सर्वस्थायित्वं निराकृतं, एवं सर्वं दुःखं दुःखमित्युपदिश्यानुकूलवेदनीयत्वं प्रत्याख्यातं, सर्वं स्वलक्षणं स्वलक्षणमित्युपदिश्य सर्वानुगतत्वं खण्डितं, ततश्चान्ते सर्वं शून्यं शून्यमित्युपवर्ण्य सर्वसत्यत्वनिराकरणपूर्वकं सर्वशून्यत्वमेवान्ततो बोधिता वयमिति जानन्तो मध्यमिकाः सर्वशून्यत्ववादिनश्च प्रख्याताः॥

---

1. तत्र नान्यत् (पा.)।

## सौगतमतभङ्गः

माध्यमिकास्त्वाहुः । सर्वज्ञबुद्धप्रणीतमेव प्रमाणम् । तत्प्रोक्त क्षणभङ्गप्रत्यक्षार्थभङ्गबाह्यार्थभङ्गधर्मधर्मिभावभङ्गादिकं भिक्षुपादप्रसारणमात्रम् । सर्वशून्यत्वमेव सुगतमतरहस्यम् । 'अहमिदं जानामी'ति ज्ञातृज्ञेयज्ञानरूपेण प्रतीयमानस्यार्थजातस्य प्रबलयुक्तिभिः सदसदुभयकोटिविनिर्मुक्ततया निःस्वभावत्वात् । तदुक्तम् —

न सन्नासन्नसदसन्नचाप्युभयात्मकम् ।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः ॥
बुद्ध्या विविच्यमानानां स्वभावो नावधार्यते ।
अतो निरभिलाप्यास्ते निःस्वभावाश्च दर्शिताः ॥

(लङ्कावतारः) इति ॥

तत्र[1] वैभाषिकमतं तावदनुपपन्नम् । रूपाद्यतिरेकेण तदाश्रयभूतस्यार्था-

---

1. विवेकविलासे बौद्धमतमेवं निरूपितम् --

बौद्धानां सुगतो देवो विश्वं च क्षणभङ्गुरम् ।
आर्यसत्याख्यया तत्त्वचतुष्टयमिदं क्रमात् ॥
दुःखमायतनं चैव ततः समुदयो मतः ।
मार्गश्चेत्यस्य च व्याख्या क्रमेण श्रूयतामतः ॥
दुःखं संसारिणः स्कन्धास्ते च पञ्च प्रकीर्तिताः ।
विज्ञानं वेदना संज्ञा संस्कारो रूपमेव च ॥
पञ्चेन्द्रियाणि शब्दाद्या विषयाः पञ्च मानसम् ।
धर्मायतनमेतानि द्वादशायतनानि तु ॥
रागादीनां गणो यस्मात्समुदेति नृणां हृदि ।
आत्मात्मीयस्वभावाख्यः स स्यात्समुदयः पुनः ॥
क्षणिकाः सर्वसंस्कारा इति या वासना स्थिरा ।
स मार्ग इति विज्ञेयः स च मोक्षोऽभिधीयते ॥
प्रत्यक्षमनुमानं च प्रमाणद्वितयं तथा ।
चतुष्प्रस्थानिका बौद्धा ख्याता वैभाषिकादयः ॥

न्तरस्याभ्युपेयत्वात् । अन्यथा 'दृष्टमेवानुभवामी(स्पृशामी)'त्यादि-प्रत्यभिज्ञानानुपपत्तेः । त्वन्मते दर्शनस्पर्शनविषययोः रूपस्पर्शयोर्भिन्न-त्वात् । न च सङ्घातमादाय तदुपपत्तिः । क्षणभङ्गपक्षे तदयोगात् । एतेन पार्थिवाऽऽप्यतैजसवायव्याश्चत्वारः परमाणवः संहताः सन्तः 'घटोऽयं', 'पटोऽयं', 'स्तंभोऽय'मित्येवं रूपेण प्रतीयन्ते न तु ततोऽन्य-द्रूपादिकमिति निरस्तम् । आश्रये विद्यमान एव पाकादिना पूर्वरूपनाशे सति रूपाद्यन्तरोत्पत्तेः सर्वानुभवसिद्धत्वात् । परमाणुव्यतिरेकेण तदारब्धस्यार्थान्तरस्याभ्युपेयत्वाच्च । अन्यथा कारकव्यापारवैयर्थ्यात् । प्रत्यक्षत्वानुपपत्तेश्च । न हि परमाणूनां प्रत्यक्षत्वं सम्भवति । अतीन्द्रिय-त्वात् । न चेष्टापत्तिः । त्वया बाह्यपदार्थस्य प्रत्यक्षत्वोपगमात् । न च परमाणूनामेव विश्लेषावस्थायामप्रत्यक्षत्वेऽपि संहतत्वावस्थायां प्रत्यक्षत्वं युक्तमिति वाच्यम् । अतीन्द्रियपदार्थानां संहतत्वावस्थायां ऐन्द्रियकत्वस्य क्वाप्यनुपलम्भात् । अन्यथा धर्माधर्मादेरपि तथात्वा-पत्तेः । न च हिमकेशवालुकादीनां संहतत्वावस्थायां ऐन्द्रियकत्वं दृष्टमिति वाच्यम् । तेषां योग्यत्वेन तदानीमपि ऐन्द्रियकतया दृष्टान्ता-संप्रतिपत्तेः । अतः घटपटादीनामपि प्रत्यक्षत्वमभ्युपगच्छता पार्थिवादि-परमाण्वतिरेकेण तदारब्धं द्रव्यान्तरमवश्यमभ्युपेयम् । न च 'एको

---

अर्थो ज्ञानान्वितो वैभाषिकेण बहुमन्यते ।
सौत्रान्तिकेन प्रत्यक्षग्राह्योऽर्थो न बहिर्मतः ॥

आकारसहिता बुद्धिः योगाचारस्य सम्मता ।
केवलां संविदं स्वस्थां मन्यन्ते मध्यमाः पुनः ॥

रागादिज्ञानसन्तानवासनोच्छेदसम्भवा ।
चतुर्णामपि बौद्धानां मुक्तिरेषा प्रकीर्तिता ॥

कृत्तिर्कमण्डलुर्मौण्ड्यं चीरं पूर्वाह्णभोजनम् ।
सङ्घो रक्ताम्बरत्वं च शिश्रिये बौद्धभिक्षुभिः ॥

(वि. वि. ८—२६५-२७५)

घटः '' एकः स्तंभः ' इत्यादि [1]प्रतीतिर्भ्रमः, परमाणुविषयप्रतीतीनामिव तस्या अपि बाधकाभावेन अभ्रमत्वोपपत्तेः। एतेन ज्ञानं साकारमिति प्रत्युक्तम्। तथात्वे प्रमाणाभावात्। ज्ञानस्यार्थविषयीकारित्व-स्वाभाव्येन तद्तिरेकेण ज्ञानसाकारत्वस्य दुर्वचत्वाच्च। किं च क्षणिकस्वलक्षणविषयं निर्विकल्पकमेव प्रमाणम्। सविकल्पकमनुमानं च कल्पिताकारविषयत्वादप्रमाणमित्यनुपपन्नम्। विकल्पप्रमाण्याभावे तत्सिद्ध्यधीननिर्विकल्पकस्याप्रामाण्यापातात्। विकल्पमूलविशिष्ट-व्यवहारस्य कल्पितविषयत्वे स्वशास्त्रस्ववचनादिविरोधापत्तेश्च।

'' [2]विकल्पो [3]वस्तुनिर्भासादसंवादादुपप्लवः॥
तस्यां यद्रूपमाभाति बाह्यमेकमिवार्थतः॥
व्यावृत्तमिव निस्तत्वं परीक्षानंगभावतः॥'' (         )

---

1. प्रत्ययोभ्रम इति पाठान्तरम्

2. वस्तुनि भासात् (पा.)

3. कल्पनापोढमभ्रान्तं प्रत्यक्षं निर्विकल्पकम्॥ इति पूर्वार्धम्॥ अस्यार्थो यथा तन्मते ज्ञानं द्विविधम्। निर्विकल्पकं सविकल्पकञ्चेति। तत्र निर्विकल्पकं ज्ञानं ग्रहणमित्युच्यते।

सविकल्पकं ज्ञानमध्यवसाय इति कथ्यते। अनयोर्मध्ये ग्रहणं निर्विकल्पकरूपं प्रमाणम्। कल्पनारहितत्वात्। सविकल्पकरूपोऽध्य-वसायः कल्पनाज्ञानत्वादप्रमाणम्। अर्थश्च द्विविधः ग्राह्योऽध्यवसेयश्चेति। एवं च प्रत्यक्षस्थल इन्द्रियसंप्रयोगानंतरं सद्य एव "इदं किञ्चित्" इत्येव निर्विकल्पकज्ञानमुत्पद्यते। तत्र ज्ञाने विषयीभूतो देवदत्तादिरर्थो ग्राह्य इत्युच्यते। स एव पश्चाज्जात्यादिविशिष्टतया ब्राह्मणोऽयं, श्यामोऽयं, पाचकोऽयमितित्येवं सविकल्पकज्ञाने विषयीभूतोऽध्यवसेय इत्युच्यते। कल्पि-तत्वमेवासत्यत्वे तन्त्रमिति बौद्धा मन्यन्ते। यथा वस्तुतः शुक्तौ सत्यां तत्र इदं रजतमिति यज्ज्ञानं जायते तत्कल्पितरजतत्वविशिष्टत्वान्न प्रमाणं तथैव जात्यादीनामपि कल्पितत्वात् तद्विशिष्टमपि ज्ञानं न प्रमाणम्।

**इत्यादिना विकल्पाप्रामाण्यसाधनमप्यनैकान्त्यादिदोषदुष्टत्वादनुपपन्नम्।**

**किं च क्षणभंगांगीकारोऽनुपपन्नः। सर्वलोकप्रसिद्धनिर्बाधप्रत्यभिज्ञाविरुद्धत्वात्। न च सेयं दीपकलिकेत्यादिप्रत्यभिज्ञावत् 'स एवायं घटः' इत्यादिप्रत्यभिज्ञाऽपि सादृश्यनिबन्धनेति वाच्यम्। अत्र प्रत्यभिज्ञायाः वस्त्वैक्यविषयत्वे बाधकाभावात्। तत्र अनन्यथासिद्धसामग्रीभेदादेरेव बाधकत्वात्।**

**किं च क्षणिकपक्षे पुण्यपापादिकर्तुः तत्फलभोक्तुश्च भिन्नत्वेन कृतहानादिप्रसंगः।**

**"[1]यस्मिन्नेव हि सन्ताने आहिता कर्मवासना।**
**फलं तत्रैव बध्नाति कार्पासे रक्तता यथा"॥**

---

कल्पनापोढं कल्पनारहितं, अभ्रांतं सत्यं प्रमाणमिति यावत्। तत् निर्विकल्पकं ज्ञानमिति यावत्। विकल्पः सविकल्पकज्ञानम्। संवादः सर्वेषामैकमत्येन ज्ञानम्। कल्पितत्वादेव सविकल्पके सर्वेषामैकमत्यं नास्तीत्यविसंवादः। तस्मादप्रमाणम्। तथा कल्पितेन जात्यादिरूपेण ईदृशं ईदृशमित्येवं वस्तु सविकल्पके निर्भास्यते।

ग्राह्यं निर्विकल्पकज्ञानविषयीभूतं यत्तद्वस्तु तदेव सत्यम्। ग्राह्यादन्यत् सविकल्पकज्ञानविषयीभूतमध्यवसेयमिति यत्तद्वस्तु न सत्यम्। किन्तु तुच्छम्। ग्रहणसंज्ञकनिर्विकल्पकज्ञानमेव प्रमाणम्। तदन्यत्सविकल्पकमप्रमाणम्। तच्च सविकल्पकं ज्ञानं शब्दजं लिङ्गजं, इन्द्रियादिजन्यं चेति।

तदेतत्संगृह्याह——

ग्राह्यं वस्तु प्रमाणं हि ग्रहणं यदितोऽन्यथा।
न तद्वस्तु न तन्मानं शब्दलिङ्गेन्द्रियादिजम्॥ इति॥

1. प्रमाणत्वादायातः प्रवाहः केन वार्यत इति न्यायेन (अयोग्यमिति भासमानमपि प्रमाणसिद्धं चेदवश्यं स्वीकार्यमेवेति न्यायतात्पर्यम्) यत् सत् तत् क्षणिकमित्याद्यनुमानसिद्धं क्षणिकत्वमनुभवानारूढमपि न त्यक्तुं शक्यम्।

इत्यादिदृष्टान्तोऽप्यनुपपन्नः । वासनाधारस्थिरद्रव्यानुवृत्त्यादिना जायमानस्य कार्यविशेषस्य क्षणिकसंतानादिना उपपादयितुमशक्यत्वात् ।

**एवं बाह्यपदार्थेष्वनुमेयत्वं वदन् सौत्रान्तिकोऽपि निरस्तः । तथाविधप्रक्रियायां मानाभावात् । घटपटादीनां प्रत्यक्षसिद्धत्वेन तदनुमेयत्वोक्त्ययोगाच्च ।**

**किं च बाह्यार्थानुमानं केनचिल्लिंगेनेति वक्तव्यम् । तत्र घटपटाद्यनुमाने किं लिंगम् । न तावत्तद्विषयं ज्ञानं तस्यैवानिष्पत्तेः । तन्निष्पत्तौ च अनुमानवैयर्थ्यात् । तस्य विषयज्ञप्त्यर्थत्वात् । तदविषयज्ञानेन तदनुमानायोगाच्च । नापि सर्वस्य क्षणिकत्वाद्विषयध्वंसो लिंगम् । त्वन्मते तस्याप्यनुमेयत्वेन तेन प्रतियोग्यनुमानायोगात् । अन्यथा अनवस्थानात् । तस्य प्रत्यक्षवेद्यत्वे च घटादिना किमपराद्धम् ।**

---

बौद्धानां दर्शन आत्मा ज्ञानरूपः क्षणिकानामात्मनां सन्तानं च प्रतिव्यक्तिभिन्नमेव । एवञ्च यज्ञदत्तीयसंतानघटकेन पूर्वक्षणिकेन केनाचिदात्मना कृतस्य कर्मणः फलं तत्संतानवर्तिनैव केनचिदुत्तरक्षणिकेनात्मनोपभुज्यते । नन्वेवमन्येन कृतस्य कर्मणः फलमन्येनोपभुज्येत चेत् सन्तानान्तरवर्तिनाप्यात्मनोपभुज्येत । तथा च देवदत्तकृतकर्मफलोपभोगो यज्ञदत्तस्यापि प्राप्नोति । न चैवं दृश्यते । तत्र कार्यकारणभावस्य नियामकत्वात् । एकस्मिन्नेव संताने तत्तत्पूर्वक्षणिकार्थस्य स्वस्वोत्तरक्षणिकार्थं प्रति कारणत्वात् देवदत्तीयसंतानघटकस्यात्मनो यज्ञदत्तीयसंतानघटकेनात्मना सह कार्यकारणभावाभावेनातिप्रसङ्गाभावात् । यथा च मधुररससंस्कृतानामाम्रबीजानां हलादिना विभेदनेन शिथिलीकृतायां भूमावुप्तानामङ्कुरकाण्डस्कन्धशाखापल्लवादिपरम्परया तदीयफले माधुर्यं दृश्यते यथावा लाक्षारसावसिक्तानां कार्पासबीजादीनामङ्कुरादिपारम्पर्येण कार्पासादौ रक्तिमनियमः तद्वत् क्षणिकपक्षे नातिप्रसङ्गः कश्चिदापततीति तेषामभिप्रायः ।

ननु घटादिविषयज्ञाने जाते घटादिकं स्वाकारं ज्ञाने समर्प्य क्षणिकतया स्वयं नश्यति । तेन च ज्ञानाकारेणार्थाकारोऽनुमीयत इति चेन्न । घटादिविषयज्ञानस्य पूर्वमेवोत्पत्तावनुमानवैयर्थ्यस्योक्तत्वात् । विषयस्य क्षणिकतया तत् ज्ञानं तत् सत्तानिश्चयरूपं न भवतीति तन्निश्चयार्थमनुमानमावश्यकमिति चेन्न । विषयस्य क्षणिकतया अनुमितेरप्यर्थसत्तानिश्चयरूपत्वायोगेन साम्यात् । विशेषनियामकाभावेन पूर्वोत्पन्नज्ञानस्यैव विषयसत्तानिश्चयरूपत्वेनांगीकर्तव्यत्वाच्च ।

किं च वैभाषिकमते सौत्रान्तिकमते च जगतः परमाणुसमुदायरूपत्वमंगीकृतम् । तदयुक्तम् । तथाहि—

न तावदेकपरमाणुहेतुकः समुदायः । अनभ्युपगमात् । एकत्र समुदायबुद्धिव्यवहारयोरदर्शनाच्च । नाप्यनेकपरमाणुहेतुकः । विरलानेकपरमाणुषु समुदायबुद्ध्यदर्शनात् । नापि मिलितानेकहेतुकः । मेलनस्य समुदायानतिरेके आत्माश्रयात् । तदतिरेके च अपसिद्धान्तापातात् । मेलनस्य संयोगरूपत्वे च समुदायस्यापि ताद्रूप्यापातात् । अतिरिक्तस्यानभ्युपगमात् । अप्रत्यक्षत्वापातात् । क्षणिकानां परस्परसंयोगानुपपत्तेश्चेति तदेतत्सर्वमभि(प्रेत्य)संधायोक्तम् ॐ "[1]समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॐ इति"। (ब्र. सू. २-२-१८)

1. ॐ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॐ पाषण्डिषु परमाणुपुञ्जवादिनोर्वैभाषिकसौत्रांतिकयोर्मतमत्र नये निरस्यते । उभयेत्यनेकोपलक्षणम् । अपिरेकहेतुकत्वपक्षनिराससूचकः । कालकर्मादिनिमित्तेन क्षणिकोऽणुहेतुकः समुदायो भवति । नत्ववयवी कश्चिदस्तीति मते समुदायः किमेकाणुहेतुक उतानेकाणुहेतुकः । एकस्मात्समुदाय इत्यस्य व्याहत्वादराद्योऽयुक्तः । अंत्येऽपि उभयहेतुके मिलितानेकहेतुके समुदायेंऽगीकृते सति तदप्राप्तिः । तस्य समुदायस्याप्राप्तिः अनुपपत्तिरित्यर्थः । अणूनां मेलने सति समुदायः तस्मिन्सति मेलनमित्यन्योन्याश्रयादित्यर्थः । विरलानेकहेतुकत्वेतु तादृशाणूनां-सदा सत्वात् समुदायोऽपि सदा स्यादिति लयायोगादितिभावः ।

किं च "पार्थिवाप्यतैजसवायवीयाश्चत्वारः परमाणवः परमार्थसंतः" इत्यनुपपन्नम् । अकाशस्यापि तथाभूतस्य सत्त्वात् । पदार्थान्तराणामिवाकाशस्यापि प्रतीयमानत्वात्प्रतीत्या तदनुमानसंभवाच्च । अन्यथार्थान्तराणामपि तुच्छत्वं स्यात् । अविशेषात् । तस्माद्वैभाषिकसौत्रान्तिकमतमनुपपन्नम् । एवं योगाचारमतमप्यनुपपन्नम् । चिन्मात्रव्यतिरिक्तस्य मिथ्यात्वे प्रमाणाभावात् । न च सहोपलंभनियमात् नीलतद्धियोरभेदे सर्वस्य विज्ञानात्मकत्वे स्वप्नादिप्रत्ययवत् स्तंभादिप्रत्ययानामपि मिथ्यात्वमिति वाच्यम् । सहोपलंभस्य भेदसाधकतया तेनाभेदसिद्ध्ययोगात् । विज्ञानजगतोरत्यन्तविलक्षणतया अभेदायोगाच्च । सत्यभूतविज्ञानाभिन्नस्य जगतः सत्यत्वावश्यंभावाच्च । मिथ्याभूतप्रपंचाभिन्नतया विज्ञानस्यापि मिथ्यात्वापत्तेश्च । न च विज्ञानव्यतिरेकेणासत्वमेव विज्ञानाभिन्नत्वं न तु तत्स्वरूपत्वमिति वाच्यम् । तथासति जगदभिन्नत्वं विज्ञानस्यापि तद्व्यतिरेकेणासत्वमिति विज्ञानमिथ्यात्वस्यापि दुर्वारत्वात् । न च न विज्ञानस्य मिथ्यात्वं आरोपाधिष्ठानस्य सत्यत्वनियमादिति वाच्यम् । अन्यथाख्यातिवादिरीत्या, आरोप्यस्यापि सत्यत्वनियमेन प्रपंचस्य

---

समुदायेऽनेकहेतुकेऽपीति वाच्ये उभयेत्युक्तिः उभौ अवयवौ अस्य मेलनस्य तदुभयमिति समुदितानेकत्वरूपमिलितत्वरूपपक्षलाभाय । "संख्याया अवयवे तयप्", "द्वित्रिभ्यां तयस्पा यज्वा", "उभावुदात्तो नित्यमिति" स्मृतेः । यद्वोभशब्दपर्यायोऽत्रोभयशब्दः । सर्वादिसूत्रकैय्यटे उभावुदात्तो नित्यमिति नित्यग्रहणस्य समासादावुभशब्दस्योभयेत्येवरूपमित्येतदर्थज्ञापकत्वोक्तेः । एवञ्चोभयहेतुकः समुदाय इत्यत्रापि मिलितोभयहेतुकः समुदायश्चेदन्योन्याश्रयात्तदप्राप्तिः । विरलोभयहेतुकश्चेत्समुदायः सदा स्यादित्यर्थः । केचित्तु मिलिता विरलाश्चेत्युभये येऽणवस्तदुभयहेतुकेऽपि समुदाये तदप्राप्तिः । तदिति सन्निहितसमुदायो बुद्धिस्थलयश्चोच्यत इति पक्षद्वयस्यापि सूत्र एव निरास इत्याहुः ।

त्वदभिमतमिथ्यत्वासिद्धिप्रसंगात् । माध्यमिकोक्तरीत्या मिथ्याभूतस्यैवाधिष्ठानत्वोपपत्तेश्च । न चाद्वैतिभिरधिष्ठानसत्यत्वमभ्युपगतमिति वाच्यम् । तत्प्रक्रियाया अपि अग्रे निरसनीयत्वात् । योगाचारमतस्यैवाद्वैतिभिरंगीकृतत्वेन तेषां पृथक् समया[1]भावाच्च । एतावांस्तु विशेषः । योगाचारेण स्वमतं न वेदमूलं किंत्वागममूलमित्यंगीकृतम् । अद्वैतिभिस्तु योगाचारमतमेव औपनिषदीकृतमिति । यथा चैतत् तथोपपादयिष्यते । तस्माद्योगाचारमतमनुपपन्नम् । तदेतत्सर्वमभिप्रेत्योक्तम् । "ॐ न [2]भावोऽनुपलब्धेः ॐ" इति । (ब्र. सू. २-२-३०)

एवं सर्वशून्यवादिनो माध्यमिकस्यापि मतमनुपादेयम् । सर्वशून्यत्वस्य सकलप्रमाणविरुद्धत्वात् । युक्तिविरोधस्य शून्येऽपि वक्तुं शक्यत्वेन शून्यत्वस्याप्यसिद्ध्यापत्तेश्च । न हि शून्यमेव तत्त्वं अन्यत् सर्वं मिथ्येति विशिष्य किंचित्प्रमाणमस्ति । किं च जगत्सन्नभवति । असदपि न भवति । उभयात्मकमपि न भवति । उभयविलक्षणमपि न भवति । किं तु चतुष्कोटिविनिर्मुक्तं पंचमप्रकारमिति सर्वथानुप-

---

1. प्रमाणाभावाच्चेति पाठान्तरम् ।

2. ॐ न भावोऽनुपलब्धेः ॐ (२-२-९-३०) अत्र नये विज्ञानमतं निराह । जगदिति प्रकृतम् । भवतीति भावः सद्रूपं ज्ञानम् । जगत् भावो ज्ञानात्मकं न ज्ञानमेव जगदाकारेण परिणमत इति नेत्यर्थः । कुतः । अनुपलब्धेः अननुभवात् । प्रमाणाभावादित्यर्थः । उपलब्धिविरोधादित्यप्यर्थ उक्तः । ज्ञानज्ञेययोर्भेदस्य साक्षिसिद्धत्वादिति भावः । ज्ञानमिति वाच्ये भाव इत्युक्तिः "नासत" इत्युक्तदोषो नेति दर्शयितुम् । केचित्तु प्राप्तौ भुव् शुद्धिचिन्तयोरिति कविकल्पद्रुमोक्तेश्चिन्तारूपस्य ज्ञानार्थस्य भुवो रूपमिति, भा वः युष्माकं भाः साकारत्वेनाभिमतं, ज्ञानमिति वाऽभिप्रेत्य भावइत्युक्तिरित्याहुः ॥

पन्नम्। "परस्पर[1]विरोधे हि न प्रकारान्तरस्थितिः" (न्यायकुसुमाञ्जलिः ३-८) इति न्यायेन सदसत्वयोः परस्परविरुद्धतया जगतः सदसत्वयोरन्यतरत्वापत्या माध्यमिकोक्तपंचमप्रकारताऽसिद्धेः। सदसदुभयरूपत्वस्याप्यंगीकारे त्वदुक्तव्यवस्थासिद्ध्यभावापत्तेश्च। नहि सदसदुभयरूपत्वाभ्युपगमे विरोधः। न तु सन्न भवति इत्यादेरभ्युपगम इति विशेषहेतुरस्ति।

किं च शून्यात् जगदुत्पत्तिरिति कथमंगीक्रियते। भावरूपकारणादेव कार्योत्पत्तेः सर्वानुभवसिद्धत्वात्। शून्यात् कस्याप्युत्पत्तेरदर्शनाच्च। घटादिप्रागभावस्य घटादिकारणत्वमंगीकृतमिति चेत् भ्रान्तोऽसि। न हि वयं अभावस्य निमित्तत्वं नेति ब्रूमः। किन्तूपादानत्वमिति। किं च सर्वशून्यवादे स्वाभिमतशून्यं कथं सिध्येत्। स्वपक्षसाधकप्रमाणाभावात्। न च परांगीकृतवस्तुखण्डनेनैवास्मदभिमतशून्यसिद्धिः। न तु तत्सिध्यर्थं यत्नान्तरमिति वाच्यम्। वस्तुसिद्धेः प्रमाणपरतन्त्रतया स्वाभिमतवस्तुसाधकप्रमाणस्यानुसरणीयत्वात्। केवलवैतण्डिकस्य कथायामनधिकारेण प्रामाणिकैर्बहिष्करणीयत्वाच्च।

किं च प्रमाणोपलब्धस्य जगतः कथं शून्यत्वमभ्युपगम्यते। स्वाप्नपदार्थवदिति चेन्न देशकालविपर्यासादिना बाधकवशेन च स्वाप्नपदार्थस्य तथात्वेऽपि घटादिजाग्रत्पदार्थेषु बाधकाभावेन याथार्थ्यस्यैवाभ्युपगन्तव्यत्वात्। स्वाप्नपार्थानामीश्वरसृष्टतया अबाधितत्वेन च

---

1. नैकतापिविरुद्धानामुक्तिमात्रविरोधतः (न्या. कु. ३-८) न प्रकारान्तरस्थितिः न नोभयात्मकत्वं, हि यतः परस्परविरोधात्, नैकतापि नभावाभावात्मकत्वमपि, विरुद्धानामिति हेतुगर्भविशेषणं परस्परविरोधिरूपत्वात्। विरोधमेव प्रतिपादयति उक्तिमात्रविरोधतः। नाभाव इत्युक्ते च भावत्वप्रतीतेः कथमभावता, न भाव इत्युक्ते चाभावत्वप्रतीतेर्न भावत्वम्। भावाभावातिरिक्तपदार्थस्याप्रसिद्धत्वादिति यावत्। अपितु भावाभावान्यतरत्वमेवेति परमाभिप्रायः।

**सत्यत्वस्य[1] वक्ष्यमाणत्वाच्च। न हि नेदं रजतमित्यादिबाधकप्रतीतिवत् 'नायं गजः किंत्वमुक' इत्येवंरूपो बाधकप्रत्ययोऽस्ति। नास्त्यत्र गज इत्यभावमात्रप्रतीतिस्तु 'नात्र घटः' इत्यादिप्रतीतिवत् सत्यत्वेऽप्युपपन्न-मिति न किंचिदनुपपन्नम्।**

**तस्मान्माध्यमिकमतमनुपपन्नम्। तदेतत्सर्वमभिसंधायोक्तं भगवता बादरायणेन 'ॐ नाभाव[2] उपलब्धेः ॐ' (ब्र.सू.अ. २, पा. २,**

---

1. यदा कर्मसु काम्येषु स्त्रियं स्वप्नेऽभिपश्यति। समृद्धिं तत्र जानीया-त्तस्मिन् स्वप्ननिदर्शने॥ (छांद. ५-२-९) इत्यादिस्मृतितः स्वाप्नार्थानां शुभादि-सूचकत्वप्रमाणेन शाकुनवत्सत्यत्वात्। न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते। न तत्रानन्दा मुदः प्रमुदो भवन्ति। अथानन्दान्मुदः प्रमुदः सृजते। न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्त्यथ वेशान्ताः पुष्करिण्यः स्रवन्त्यः सृजते सहि सर्वस्य कर्ता (बृ. ६-३-१०) इति श्रुत्या प्रागसतामेवार्थानां स्वप्न एव दृष्टेः सृष्टेश्चोक्त्या तदैवो-त्पत्तिनिरोधयोः संभवेन, "य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः (कठ. ५-७) इति श्रुतौ तथा एतस्माद्धेव पुत्रो जायते एतस्माद्भ्रातैतस्माद्भार्या यदैनं पुरुषमेष स्वप्नेनाभिहन्ति इति (गौपवन) श्रुतौ च स्वप्नार्थानां ईश-कर्तृत्वस्योक्त्या कर्त्रभावचोद्यस्य तथा बाह्यार्थघटादिवत् स्फुटमनभिव्यक्तत्व-युक्त्या, मनोगतांस्तु संस्कारान् स्वेच्छयापरमेश्वरः। प्रदर्शयति जीवाय स स्वप्न इति गीयते" (ब्रह्माण्डे) इति स्मृत्या च बाह्योपादानविलक्षणमानस-वासनोपादानकत्वावगमेन निरूपादानत्वचोद्यस्यानवकाशात् स्वप्नानां जाग्र-त्पदार्थत्वस्यासत्वेन बाधोपपत्तेश्च साधकसद्भावाच्च स्वप्नार्थाः सत्या एवेति स्वप्नार्थाः तद्धियः तत्तिरोधानं चेति सर्वमीशाधीनमिति सत्यत्वस्येशाधीनत्वस्य च वक्ष्यमाणत्वादित्यर्थः।

2. ॐ नाभाव उपलब्धेः ॐ (२-२-८-२८) भवतीति भावः सन् अभावोऽसन्। भवतेश्चेतिणः। जगत् अभावो न शून्यव्यतिरेकेणतत्वं

**अधि. ८, सू. २८) 'ॐ वैधर्म्याच्च न स्वप्नादिवत् ॐ' इति (ब्र.सू.अ. २, पा. २, अधि. ८, सू. २९)**

**इति श्रीमत्परमहंसपरिव्राजकाचार्याणां श्रीमत्सुरेन्द्रतीर्थपूज्यपादानां शिष्येण सर्वतन्त्रस्वतन्त्रेण विजयीन्द्रभिक्षुणा विरचिते सर्वसिद्धान्तसारासारविवेचने सौगतमतभङ्गो नाम द्वितीयः परिच्छेदः ॥**

---

नास्तीति न। उपलब्धेः। सदित्युपलभ्यमानत्वादित्यर्थः। सुधायां तु तवासतो जनिरिव मम सतोऽपि कार्यजनिर्न दृष्टा जगतस्सत्त्वासम्मतेरित्यतो जगतोऽसत्त्वं नेत्याहेत्यवतार्य व्याख्यातम्। ननु सदित्युपलंभेऽपि स्वप्नादिवदसज्जगत्किं न स्यादित्यत आह।

ॐ वैधर्म्याच्च न स्वप्नादिवत् ॐ (ब्र.सू. २-२-८-२९) अभाव इति वर्तते। स्वप्नजाग्रत्वादिवत् रज्जुभुजङ्गादिवच्च जगदभावोऽसन्न। कुतः। वैधर्म्याच्च। स्वप्न एवायं न जाग्रत् रज्जुरियं न सर्प इति बाधविषयत्ववैलक्षण्यादित्यर्थः। चशब्दोऽत्र बाधाभावादित्यर्थसूचनार्थः। सुधायान्तु दृश्यत्वादिमिथ्यात्वहेत्वपाकरणार्थमप्येतदवतार्य "स्वप्नादिवज्जगत् दृश्यत्वादिना न मिथ्या। अर्थक्रियाकारित्वादिवैधर्म्यात्सत्यत्वसिद्धेः। चशब्दोक्तसत्यत्वानुभवबाधात्तत एव मिथ्यात्वे कस्यापि मानस्याभावाच्चेति" सत्प्रतिपक्षबाधमिथ्यात्वमानाभावोक्तिपरमप्युक्तम्। तेन बाधाभावो नासिद्ध इति ध्येयम्। तत्त्वप्रदीपेतु "स्वप्नादिवज्जगन्नदृश्यत्वादिना मिथ्या। स्वप्न एवायं न जागरित इति प्रतीत्या जाग्रत्वाद्येकदेशस्यैव मिथ्यात्वेन सर्वस्य तदभावेन साध्यवैकल्यात्। जाग्रत्वस्य दृष्टान्तत्वे बाधकभावाभावाभ्यां वैधर्म्यादिति" योजितम्। एतेनैवाद्वैतमतं च प्रत्युक्तं बोध्यम्।

---

# ॥ अथार्हतमतभङ्गः ॥

**इदानीं आर्हतमतं निराक्रियते। ते खल्वेवमाहुः। सर्वज्ञार्हत[1]-प्रणीतत्वादार्हतमतमेव मुमुक्षूणामुपादेयम्। आर्हतानां[2] सकललोक-संवादिग्रहगतमन्त्राद्युपदेष्टृत्वात् तदुपदिष्टमन्त्राणां फलवत्त्वदर्शनाच्च सर्वज्ञत्वसिद्धिः। न च तन्मतस्य रागद्वेषादिमूलत्वं शंक्यम्। प्राधान्येन तत्र वैराग्याहिंसादीनामेव प्रतिपादनेन तन्मतस्य रागद्वेषादि-मूलत्वाभावनिश्चयात्।**

**तत्र वस्तु द्विविधम्। द्रव्य[3]पर्याय[3A]भेदात्। जीवधर्माधर्म-पुद्गल[4]कालाकाशरूपाणि द्रव्याणि। तेषामवस्था पर्याय इत्युच्यते।**

---

1. जैनमतप्रवर्तकेनार्हन्मुनिना प्रदर्शितमतमार्हतमतम्।

अर्हत्स्वरूपं च हेमचन्द्रसूरिभिराप्तनिश्चयालङ्कारे निरटङ्कि।

सर्वज्ञो जितरागादिदोषस्त्रैलोक्यपूजितः।

यथास्थितार्थवादी च देवोर्हत्परमेश्वरः॥ इति॥

अर्हन्मुनेः सर्वज्ञत्वेऽनुमानमेतदुदाहृतम्।

तथाहि कश्चिदात्मा (अर्हन्मुनिः) सकलपदार्थसाक्षात्कारी तद्ग्रहण-स्वभावत्वे सति प्रक्षीणप्रतिबन्धप्रत्ययत्वात् यत् यद्ग्रहण स्वभावत्वे सति प्रक्षीण प्रतिबन्धप्रत्ययं तत्तत्साक्षात्कारि यथापगततिमिरादिप्रतिबन्धं लोचनविज्ञानं रूपसाक्षात्कारि। तद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिबन्धप्रत्ययश्च कश्चिदात्मा। तस्मात्सकलपदार्थसाक्षात्कारीति।

2. आर्हतानां सकललोकसंवादिग्रहगतमन्त्रोपदेष्टृत्वात् (पा.)

3. गुणपर्यायवत् द्रव्यम् (त. ५-३८)

3A. क्रमभावी द्रव्यस्यावस्थाविशेषः पर्यायः। क्रमभावी अयावद्द्रव्य-भावी पर्यायः यथा जीवस्य नरकादिपर्यायाः।

4. पूरयंति गलंतीति पुद्गलाः। स्पर्शरसगन्धवर्णवन्तः पुद्गलाः। (तत्वार्थाधिगमसूत्र ५-२३)

**द्रव्यपर्यायातिरिक्तं न तत्त्वान्तरमस्ति। द्रव्यपर्याययोश्च भेदाभेदौ। तथा प्रमाणसिद्धत्वात्। सत्वं, असत्वं, सदसत्वं, सदसद्विलक्षणत्वं, सत्वेसति सद्विलक्षणत्वं, असत्वेसति असद्विलक्षणत्वं, सदसदात्मकत्वे-सति सदसद्विलक्षणत्वमिति सप्तभङ्गी।[5] आत्मा च तत्तद्देह[6]परिमाण इति॥**

---

5. स्याच्छब्दोऽयमनेकान्तद्योतकतिङन्तप्रतिरूपकः। कथंचिदित्यर्थको-निपातः।

यथोक्तं—वाक्येष्वनेकान्तद्योती गम्यं प्रति विशेषणम्।
स्यान्निपातोऽर्थयोगित्वात् तिङन्तप्रतिरूपकः॥ इति॥

सप्तानां अस्तित्वनास्तित्वादीनामेकत्र वस्तुनि मिथो यो भङ्गो युगपदेकत्र सर्वेषां समुच्चयः सोऽस्मिन्नस्तीति सप्तभङ्गीति कथ्यते। अथवा सप्तानां साङ्ख्याद्युक्तानां अस्तित्वाद्येकान्तानां भङ्गः सप्तभङ्गः। सोऽस्मिन्नस्ति प्रति-पाद्यतया विद्यते इति सप्तभङ्गी।

स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति, स्यादवक्तव्यः, स्यादस्ति चा वक्तव्यः, स्यानास्ति चा वक्तव्यः, स्यादस्ति च नास्ति चा वक्तव्य इति॥ सप्तभङ्गी॥

**जिनदत्तसूरिणा जैनमतमेवं निरूपितम्ः—**

बलभोगोपभोगानामुभयोर्दानलाभयोः।
अन्तरायस्तथा निद्रा भीरज्ञानं जुगुप्सितम्॥
हिंसा रत्यरती रागद्वेषाववितिः स्मरः।
शोको मिथ्यात्वमेतेऽष्टादशदोषा न यस्य सः॥
जिनो देवो गुरुः सम्यक्तत्त्वज्ञानोपदेशकः।
ज्ञानदर्शनचारित्राण्यपवर्गस्य वर्तनी॥
स्याद्वादस्य प्रमाणे द्वे प्रत्यक्षमनुमापि च।
नित्यानित्यात्मकं सर्वं नव तत्त्वानि सप्त वा॥

जीवाजीवौ पुण्यपापे चास्रवः संवरोऽपि च।
बन्धो निर्जरणंमुक्तिरेषां व्याख्याधुनोच्यते ॥
चेतनालक्षणो जीवः स्यादजीवस्तदन्यकः।
सत्कर्मपुद्गलाः पुण्यं पापं तस्य विपर्ययः ॥
आस्रवः स्रोतसो द्वारं संवृणोतीति संवरः।
प्रवेशः कर्मणां बन्धो निर्जरस्तद्वियोजनम् ॥
अष्टकर्मक्षयान्मोक्षोऽथान्तर्भाविश्च कैश्चन।
पुण्यस्य संवरे पापस्यास्रवे क्रियते पुनः ॥
लब्धानन्तचतुष्कस्य लोकागूदस्य चात्मनः।
क्षीणाष्टकर्मणो मुक्तिर्निर्व्यावृत्तिर्जिनोदिता ॥
सरजोहरणा भैक्षभुजो लुञ्चितमूर्धजाः।
श्वेतम्बरा क्षमाशीलाः निःसङ्गा जैनसाधवः ॥
लुञ्चिताः पिच्छिकाहस्ता पाणिपात्रा दिगम्बराः।
ऊर्ध्वाशिनो गृहे दातुर्द्वितीयाः स्युर्जिनर्षयः ॥
भुङ्क्ते न केवली न स्त्री मोक्षमेति दिगम्बरः।
प्राहुरेषामयं भेदो महान् श्वेताम्बरैः सह ॥

6. आत्मा चैतन्यमयः, ज्ञानरूपः, जन्मी, भोक्ता, मोक्षाधिकारी, जीवश्च-नित्यरूपः। यादृशे शरीरे जीवः प्रविशति तदाकारवान् लघुर्वा दीर्घो वा भवति। अहिंसा परमो धर्मः। अद्वेषसदाचाराचौर्यब्रह्मचर्यदानाग्रहणाख्याः पञ्चनियमाः सर्वैर्जैनैः पालनीयाः। एभिर्मोक्षोऽधिगम्यते। विषयवासनाभ्यो मनसः परावर्तनाय व्रतोपवासानुष्ठानम्। ज्ञानात्केषाञ्चित्कर्मणां क्षयो भवति। केषाञ्चिद्भोगात्। ततः कर्मक्षयात् पक्षिणः पञ्जरादिवत् आत्मनो देहान्मोक्षो भवेत्। देहावस्थानस्य कर्मनिमित्तत्वात्। ततः यथा पंजरान्मुक्तः खग ऊर्ध्वं व्रजत्येवमेवालोकाकाशगोचरो नित्यमूर्ध्वं व्रजत्येव जीव इति तन्मतम्। अयं च सम्प्रदायो देहातिरिक्तदेहपरिमाणात्मवादी।

न तावदार्हतमतं मुमुक्षूपादेयम्। क्वचित् भ्रान्तपुरुषप्रणीतत्वात्। क्वचित् विप्रलंभादिना प्रवृत्तत्वाच्च। न चात्र मानाभावः। सर्वप्रमाणविरुद्धसप्तभंगीप्रभृत्यर्थप्रतिपादकत्वात्। न च सकललोकसंवादिग्रहगत्याद्युपदेष्टृत्वात् तत्प्रणेतुराप्तत्वमिति वाच्यम्। क्वाचित्कसंवादस्य विप्रलंभद्वारत्वसंभवेन तावन्मात्रेण सर्वत्र तत्प्रणेतुराप्तत्वस्य निश्चेतुमशक्यत्वात्।

तदुपदिष्टमन्त्राणां फलवत्त्वदर्शनेऽपि न तावन्मात्रेण तन्मतस्योपादेयत्वम्। मन्त्रव्याकरणादिभिः वर्णपदवाक्यादिसामर्थ्यं ज्ञात्वा तेषामपि तत्तद्वर्णपदादिघटितफलवन्मन्त्रोपदेशस्यापि विप्रलम्भद्वारत्वसंभवात्। क्वाचित्कसंवादेन सर्वस्यापि विश्वसनीयत्वे बौद्धागमस्यापि (गमोक्तस्यापि) विश्वसनीयत्वापातात्। "अहं सर्वज्ञः" इत्यार्हतवाक्यस्येव बुद्धवाक्यस्यापि दर्शनेन स्वस्ववचनेन सर्वज्ञत्वासिद्धेश्च। अहिंसाद्युपदेशोऽपि केशोल्लुञ्चनाद्युपदेशेन विरुद्धः। वेदविहिताग्नीषोमीयादिहिंसा पापसाधनं आत्मपीडादिरूपकेशोल्लुञ्चनादिकं धर्म इत्यत्र प्रमाणाभावाच्च। न चाग्नीषोमीयादिहिंसायाः परपीडारूपत्वादधर्मसाधनत्वं केशोल्लुञ्चनादेस्त्वतथाभूतत्वाद्धर्मसाधनत्वमिति वाच्यम्। परपीडारूपकेशोल्लुञ्चनादिकमुपदिशतोऽर्हतः सर्वज्ञस्यापायोपदेष्टृत्वापातात्। पशुहिंसादिप्रतिपादकवेदभागो राक्षसप्रक्षिप्तः इति जल्पनं तु स्थावरादिहिंसादिकं धर्म इत्यंगीकुर्वतामत्यन्तविरुद्धम्। तथाविधशंकायाः सर्वत्र सुलभत्वात्। किं च द्रव्यपर्यायातिरेकेण वस्त्वन्तरं नास्तीत्यनुपपन्नम्। द्रव्याश्रितावस्थित्यतिरिक्तधर्माणां नित्यानां सहोत्पन्नानामगन्तुकानां च प्रमाणसिद्धत्वात्। ईश्वरादिद्रव्यान्तरप्रतिक्षेपोऽप्यनुपपन्नः। ईश्वरादेर्नित्यनिर्दोषागमसिद्धत्वात्। यथा चैतत्तथाऽग्रे वक्ष्यते।

किं च द्रव्यपर्यायवर्गे सप्तभङ्गीति जैनाभ्युपगमो न युक्तः। व्यवस्थितसदसत्प्रकारद्वयातिरिक्तप्रकारस्याप्रामाणिकत्वात्। एकैकप्रकाराभ्युपगमे दोषदर्शनात् तथोपेयत इति चेत्तथासति सप्तभंग्यंगीकारेऽपि दोषदर्शनात्तस्या अपि त्यागप्रसंगात्। जगतः सत्त्वैक-

प्रकाराभ्युपगमे दोषाभावाच्च। न हि जगतः सत्त्वैकप्रकाराभ्युपगम एव विरोधः न तु सप्तभंग्यंगीकार इत्यत्र विशिष्य नियामकमस्ति। विरोधस्योभयत्र तुल्यत्वात्।

न च सिद्धान्तेऽपि एकस्मिन्नेव भिन्नत्वाभिन्नत्वादिविरुद्धधर्मसमावेशाभ्युपगमात्तद्वदेव सप्तभंग्यंगीकारोऽस्त्विति वाच्यम्। सिद्धान्ते उपाधिभेदेन तथाभ्युपगमेन दोषाभावात्। त्वयोपाधिभेदेन जगतस्तथात्वानभ्युपगमाच्च। भिन्नत्वाभिन्नत्वादिधर्माणामनैकान्त्यासाधकप्रमाणसद्भाववत् जगति सत्त्वासत्त्वादिसप्तभङ्गीसाधकप्रमाणादर्शनाच्च। तस्माज्जैनाभ्युपगतः सप्तभंगीपक्षो न युक्तः। तदेतत्सर्वमभिसन्धायोक्तं—"ॐ नैक[1]स्मिन्नसंभवात् ॐ" (ब्र. सू. अ. २, पा. २, अधि. १०, सू. ३३) इति॥

---

1. ॐ नैकस्मिन्नसंभवात् ॐ॥ (ब्र. सू. २-२-१०-३३) अत्र क्षपणकमतं निराक्रियते। सत्वं, असत्वं, सदसत्वं, सदसद्विलक्षत्वं, सत्वे सति सद्विलक्षणत्वं, असत्वे सति असद्विलक्षणत्वं, सदसदात्मकत्वे सति सदसद्विलक्षणत्वमित्यनियतसप्त प्रकारा एकस्मिन्वस्तुनि न युक्ताः। कुतः। असंभवात्। अप्रमाणिकत्वेनासंभावितत्वादित्यर्थः। यदपि देहपरिमाणत्वं जीवस्योपेतं तत्किं सर्वदेशगतचेष्टोपपत्यर्थमुपेयते अथ देहावच्छेदं विनाऽऽत्मनः परिमाणाभावाद्वा। आद्य आह।

ॐ एवं चाऽऽत्माऽकार्त्स्न्यम् ॐ॥ (ब्र. सू. २-२-१०-३४) जैनमतप्रसङ्गसन्निधापितमात्मनो देहपरिमाणत्वमेवमिति परामृश्यते। एवञ्च देहपरिमाणत्वे सत्यात्मनो मशकादिदेहस्थात्मनो गजादिदेहप्राप्तावकार्त्स्न्यमपूर्णत्वं सर्वदेहाव्यापित्वं स्यादित्यर्थः। ततश्च न सर्वदेहचेष्टेतिभावः। यद्वाऽऽत्मनो गजादिदेहस्थस्य मशकादिदेहप्राप्तावात्मनोऽकार्त्स्न्यं देह एव कार्त्स्न्यं न स्यादतिरेकः स्यादित्यर्थः। ततश्च कायपरिमाणत्वभङ्ग इति भावः। चशब्देनैवैषोऽप्यर्थः संग्राह्यो न वृत्यन्तरेणेत्येके। यद्वा यद्देहमाप्नोति तदा तद्देहपरिमाण इत्यत आह।

**किं च देहपरिमाण[1]आत्मेत्यसंगतम् । आत्मनो गजमशकादि-देहपरिग्रहे संकोचविकासप्रसंगेन सावयवत्वापत्याऽनित्यत्वापत्तेः ।**

ॐ न च पर्यायादप्यविरोधो विकारादिभ्यः ॐ ॥ (ब्र. सू. २-२-१०-३५) पर्यायादपि क्रमादपि । क्रमात्तत्तद्देहपरिमाणत्वांगीकारादपि अविरोधो न भवति । कुतः । विकारादिभ्यः विकारित्वापत्तेः । ततश्चानित्यत्वानिर्मोक्षत्वशास्त्रवैय्यर्थ्यानि तेभ्य इत्यर्थः । स्वमते जीवस्य सुखादिभोगकृतोच्चत्वनीचत्वरूपविकारोऽस्ति । तस्य स्वरूपविकाससंकोचरूपत्वात् । तथापि चैतन्यादियावद्द्रव्यभाविधर्मनिवृत्तावेवानित्यत्वोपगमान्नानित्यत्वमित्युक्तं सुधायाम् । उक्तञ्च नयचन्द्रिकायां संकोचविकासादन्यथाऽभावान्नाशो नेति ॥ प्रागुक्तान्त्यपक्षं प्रत्याह ।

ॐ अंत्यावस्थितेश्चोभयनित्यत्वादविशेषात् ॐ ॥ (ब्र. सू. २-२-१०-३६) अन्त्यस्य मुक्तिगतात्मपरिमाणस्यावस्थितेस्तदवच्छेदकतया नित्यदेहावश्यंभावेनोभयस्य मुक्तावात्मतद्देहयोर्नित्यत्वादद्यतनदेहानामपि नित्यत्वं स्यादविशेषाद्देहत्वाविशेषादित्यर्थः । वृत्यन्तरन्तु अंत्या या अवस्थितिः सततोर्ध्वगतिरूपा मुक्त्याख्या तस्याश्च विकारात्तद्रूपादपि विकारादात्मनोऽनित्यत्वं स्यादिति पूर्वस्मादनुषङ्गः । न केवलं परिमाणपर्यायादिति चार्थः । एवमपि तस्य नित्यत्वे उभयनित्यत्वादात्मप्रपंचयो र्द्वयोरपि नित्यत्वापातात् विकारित्वमात्रस्य त्वया अप्रयोजकीकृतत्वात् विकारविशेषस्य नाशव्याप्तत्वेन त्वयाऽनंगीकारादिति भावः । यच्च स्थास्नूनां परिमाणभेदेनात्मनो विकारापत्या वा देहेन्द्रियापत्तिबाधकेन वा निरात्मकत्वमुपेतम् । तच्च न । आद्ये गजादिदेहस्याविशेषात् । अंत्ये स्थास्नूनां मानुषाद्यविशेषात् । गीतादिश्रवणेन स्थास्नूनामपि विकासदृष्ट्या देहेन्द्रियाद्यनुमानादिति सुधोक्तं ध्येयम् । अत्र प्रपंचस्यापि नित्यत्वादिति वाच्ये उभयेत्युक्तिर्न्यायसाम्यसूचनार्था ॥

1. कायपरिमाणात्मनः दृष्टादृष्टसाधनैश्च सत्वं, असत्वं, सदसत्वं, सदसद्विलक्षणत्वं, सत्वेसति सद्विलक्षणत्वं, असत्वेसति असद्विलक्षणत्वं,

न च गजादिदेहपरिग्रहस्तस्य तस्यात्मनो नियत इति न संकोचविकासप्रसक्तिरिति वाच्यम्। बाल्ययौवनस्थाविरादिवयोभेदेन देहे तत्तत्परिमाणविशेषदर्शनेन तथापि संकोचविकासप्रसक्तेर्दुर्वारत्वात्। एकस्यात्मनो नियतैकजातीयदेहपरिग्रहे प्रमाणाभावाच्च। कर्मणां विचित्रनानादेहपरिग्रहहेतुत्वस्य त्वयाप्यंगीकृतत्वाच्च। नन्वात्मनः संकोचविकासाभ्युपगमे सावयवत्वमिति कोऽर्थः? यद्वशादनित्यत्वमापाद्यते। न तावदवयवसंयुक्तत्वम्। नित्यद्रव्यमात्रस्य तथात्वेनानैकांत्यात्। नाप्यवयवसमवेतत्वं अवयवसमवेतद्रव्यत्वंवा। अवयवगतरूपघटादिनाऽनैकांत्यात्। समवायानभ्युपगमाच्च। नाप्यवयवारब्धद्रव्यत्वम्। अन्तःकरणादेः सावयवस्य परेणावयवारब्धद्रव्यत्वानभ्युपगमेनाव्याप्तेः। अन्तःकरणस्याहंकारपरिणामरूपत्वाभ्युपगमात्। आरंभवादस्य परेण निराकृतत्वाच्च।

किं च परेण परमाणूनां सावयवत्वमङ्गीक्रियते। न चानित्यत्वमिति व्यभिचारःस्फुटः। एतेन सांशत्वं सावयवत्वमिति निरस्तम्। परमाणूनां सांशत्वेऽपि नित्यत्वोपगमात्। किं चात्मनः संकोचविकासवत्वेन सावयवत्वेऽपि नानित्यत्वम्। सावयवत्वस्य तत्राप्रयोजकत्वात्। विनाशसामग्रया एव प्रयोजकत्वाच्च। न ह्यात्मनि विनाशसामग्रयस्ति। न च सावयवत्वेऽपि नाशसामग्रयपि स्यादिति वाच्यम्। बाधादेव तदप्रसरात्। यदि च संकोचविकासवत्वस्य सावयवत्वे सावयवत्वस्यचानित्यत्वे निरूपाधिसहचार इत्यङ्गीक्रियेत तर्हि त्वन्मते

---

सदसत्वेसति सदसद्विलक्षणत्वमित्यनियतसप्तभङ्गयात्मकस्य जगतो जन्मादिसंभवात् ईशेन कृत्यं नेत्येवं रूपेण जैनोक्तं तु न युज्यते। व्यवस्थितसदसत्वभावाभावत्वादिप्रकारद्वयान्यप्रकारस्याप्रामाणिकत्वेनासम्भावितत्वात्। एकैकपक्षोक्तदोषपरिजिहीर्षया सप्तभङ्गयङ्गीकारे सर्वपक्षोक्तदोषानिवारणाच्च। मशकमतङ्गादिसूक्ष्मस्थूलदेहप्राप्त्या आत्मनस्तत्र कात्स्न्यातिरेकयोः प्राप्तेः। पर्यायेणतत्तत्कायपरिमाणोक्तौ च विकारित्वेनानित्यताप्राप्तेः। आत्मनः कायपरिमाणत्वप्रक्रियायाः अप्रामाणिकत्वाच्च तन्मतस्य दुष्टत्वमिति सारम्।

आत्मनोऽणुत्वेन जडत्वापत्तिः । अणुत्वजडत्वयोरपि निरूपाधिक सहचार इति वक्तुं शक्यत्वात् । अत्र सहचारमात्रत्वे च तत्रापि तथाऽस्तु । विशेषनियामकाभावात् । तस्मात्संकोचविकासवत्वेऽपि नात्मनोऽनित्यत्वमिति चेत् उच्यते ॥ आत्मनः संकोचविकासवत्वेऽपि परिमाणभेदेन तदाश्रयभेदो दुर्वार इति कृतहानादिकं स्यादेव । न च बाल्याद्यवस्थासु देहे परिमाणभेददर्शनेऽपि तत्रैकत्वाभ्युपगमात् परिमाणभेदो न तदाश्रयद्रव्यभेदप्रयोजक इति वाच्यम् । तत्रापि परिमाणभेदे देहभेदस्य दुर्वारत्वात् । अन्यथा योऽहं बाल्ये पितरावन्वभूवं स एव स्थाविरे प्रनप्तॄननुभवामीत्याद्यनुसंधानबलाद्देहातिरिक्तात्मासिद्धिप्रसंगात् । तथाविधप्रत्यभिज्ञाया देहैक्यविषयत्वसंभवात् । न च देहातिरिक्तात्मसिद्धिर्मानान्तरेणेति युक्तम् । श्रुत्यतिरिक्तप्रमाणमात्रस्य तदसाधकत्वात् । श्रुतेश्च तत्र त्वया प्रामाण्यानभ्युपगमात् । न चागमात्तत्सिद्धिरिति युक्तम् । तस्य स्वतंत्रप्रमाणावष्टंभनं[1] विना तत्राप्रवृत्तेः । न चागमस्यैव स्वातन्त्र्येण प्रामाण्यम् । पौरुषेयत्वोपगमात् । न हि पौरुषेयत्वे स्वातन्त्र्यं संभवति । तस्मात्प्रत्यक्षत एव देहातिरिक्तात्मसिद्धिरिति परिमाणभेदेन द्रव्यभेदो दुर्वारः ।

किं चात्मनो देहानुरूपपरिमाणवत्वे प्रमाणाभावः । न च सर्वांगीणसुखाद्यनुसंधानबलात्तस्य तथात्वसिद्धिः । विभुत्वेनापि तदुपपत्तेः । तदणुत्वपक्षे च दीपादेरालोकद्वारा विषयप्रकाशकत्ववत् अंतःकरणादिद्वारा प्रादेशिकात्मनः प्रादेशिकसुखाद्यनु(सन्धातृत्वोपपत्तेः)(पा.)भवितृत्वोपपत्तेः । न चाणुत्वपक्षे कायव्यूहानुपपत्तिः । अंतःकरणादिद्वाराऽशतो व्याप्त्या वा सर्वस्य देहस्यात्मसंबन्धसंभवात् । न चातिप्रसंगः । तत्तत्कर्मार्जितत्वस्यापि तत्तदात्मीयत्वप्रयोजकत्वात् ।

ननु जीवस्य नाणुत्वं प्रमाणाभावात् । न च वालाग्रशत[2]-

---

1. भेनेति (पा.)

2. वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥ (श्वे. उ. अ. ५, मंत्र. ९)

भागस्येत्यादिकमेव प्रमाणमिति वाच्यम् । तस्य सौक्ष्म्याभिप्रायत्वात् । अन्यथा पूर्वत्र "अङ्गुष्ठमात्रो रवितुल्यरूपः संकल्पाहंकारसमन्वितो यः । बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यपरोऽपि दृष्टः"॥ (श्वे. उ. अ. ५ मन्त्र ८) इत्यङ्गुष्ठमात्रत्वाराग्रमात्रत्वादिकमपि प्रतिपादितमिति तत्सिद्धिरपि स्यात् । नचेष्टापत्तिः । विरुद्धानेकपरिमाणानामेकत्रासंभवात् । न चाणुपरिमाणात्मनो हठादुपदेष्टुमशक्यतया तदर्थमङ्गुष्ठमात्रत्वाद्युक्तिरिति वाच्यम् । "एषोऽणुरात्मा चेतसा वेदितव्यः" ( ) इत्यादिपरविषयश्रुतेरिव तज्ज्ञानिनोऽपि सौक्ष्म्याभिप्रायत्वोपपत्तेः । "यदेकां शाखां जीवो जहात्यथ सा शुष्यति" (छा. उ. अ. ६. खं. ११) इत्यादिश्रुत्या जीवस्य तत्तदवयवविशेषप्रतिपादनेनाणुत्वविभुत्वयोरनंगीकार्यत्वाच्च । न च "नित्यः सर्वगतः स्थाणुः" (भ. गी. अ. २ श्लो. २४) इति तद्विभुत्वसिद्धिः । 'जहाति' इति श्रुत्यनुसारेण स्मृतेरर्थान्तरपरत्वात् । "अग्निर्यथैको भुवनं प्रविष्टः" (कठ. अ. २ व. २. मन्त्र ९) "वायुर्यथैको भुवनं प्रविष्टः" (कठ. उ. अ. २ व. २ मन्त्र १०) इत्यादाविव समूहाभिप्रायेण सर्वगतत्वोपपत्तेः । तथा च परिशेषादात्मनो देहानुरूपपरिमाणसिद्धिरिति ॥

मैवम् ॥ आत्मनो देहानुरूपपरिमाणत्वे संकोचविकासप्रसंगेन भेदावश्यंभावेन कृतहानादिप्रसंगेनाणुपरिमाणवत्वस्याभ्युपगन्तव्यत्वात् । यथा चात्मनोऽणुत्वं न विभुत्वं तथाऽग्रे प्रतिपादयिष्यामः । तस्मादार्हतमतमनुपपन्नम् । तदिदमुक्तम्—"ॐ एव[1]चात्माऽऽकार्त्स्न्यम् ॐ" इति । (ब्र. सू. अ. २, पा. २, अधि. १०, सू. ३४)

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां श्रीमत्सुरेन्द्रतीर्थपूज्यपादानां शिष्येण सर्वतन्त्रस्वतन्त्रेण विजयीन्द्रभिक्षुणा विरचिते सर्वसिद्धान्तसारासारविवेचने आर्हतमतभंङ्गो नाम तृतीयः परिच्छेदः ॥

---

1. व्याख्यानमस्य पूर्वमेव दर्शितम्

# ॥ अथ पाशुपतमतभङ्गः ॥

**सर्वतन्त्रस्वतन्त्रश्रीमद्विजयीन्द्रभिक्षुविरचितसर्वसिद्धान्तसारासार-विवेचनग्रन्थे सम्प्रत्युपलभ्यमाने पाशुपतमतनिरूपणभागस्यानुप-लम्भादन्यत्रोपलभ्यमानं तन्मतस्वरूपनिरूपणं सङ्गृह्यात्र प्रादर्शि ।**

सकलगुणाश्रयः स्वतन्त्रः सर्वकर्ता पशूनां पाशबन्धमोक्षप्रदः पशुपति-रिति माहेश्वराः प्रतिपादयन्ति । ते च माहेश्वराः पाशुपताः, शैवाः, काला-मुखाः, महाव्रताश्चेति चतुर्विधाः । तेषु केचन माहेश्वराः मोक्षे पशूनां निरतिशयैश्वर्यं महेश्वरवत्कामयमानाः मोक्षावस्थायां पारतन्त्र्यमसहमानाश्च स्वातन्त्र्यादिपरमैश्वर्यसम्पन्नमोक्षावस्थाप्रतिपादकं पाशुपतशास्त्रमेवाश्रयन्ते । तच्छास्त्रेतु परमपुरुषार्थसाधनं कार्य, कारण, योग, विधि, दुःखान्तरूपं पदार्थपञ्चकं तत्त्वज्ञानोपयोगितया प्रपञ्चितम् । पशूनां पतिर्महेश्वर एव पशुपतिः । जीवास्तु पशवः परिकीर्तिताः । जीवानां पशुशब्दवाच्यत्वे लिङ्गपुराणवचनं प्रमाणम् । तदुक्तम्—

"ब्रह्मान्ता स्थावरान्ताश्च देवदेवस्य शूलिनः ।
पशवः परिकीर्त्यन्ते समस्ताः पशुवर्तिनः" इति ॥

ज्ञानापकर्षेण पशुतुल्यत्वात् पशुवद्वर्तन्त इति वा पशवो जीवाः । पाशुपतशास्त्र-तत्त्वभूताः पूर्वोक्त कार्य, कारण, योग, विधि, दुःखान्ताः पञ्चपदार्थाः पशुपतिना महेश्वरेण जीवपाशविमोक्षणायोपदिष्टाः । यथाक्रमं तन्निरूपणं यथा—सर्वं हि कार्यं परमेश्वराधीनत्वाविशेषादस्वतन्त्रम् । तच्च विद्या, कला, पशुश्चेति त्रिविधम् । एतेषां विज्ञानात्संशयादिनिवृत्तिस्संजायते । एतेषु पशुशब्दितानां जीवानां गुणः विद्या । सापि बोधाबोधस्वभावा द्विविधा । तत्र बोधस्वभावा विवेकाविवेकप्रवृत्तिभेदा द्विविधा चित्तमित्युच्यते । पशुत्वप्राप्ति-फलकधर्माधर्मात्मकविद्यातु जीवगुणविशेषत्वादबोधत्वेन व्यपदिश्यते ।

चेतनपरतन्त्रत्वे सत्यचेतना कला । सा च कार्याख्या कारणाख्या-चेति द्विविधा । तत्र कार्याख्या विषयरूपा । कारणाख्या इन्द्रियरूपा ।

इन्द्रियाणान्तु विषयज्ञानकारणत्वादिन्द्रियशब्देन व्यवहारः। सा च कारणाख्या त्रयोदशविधा । ज्ञानेन्द्रियपञ्चकं, कर्मेन्द्रियपञ्चकं, अध्यवसायाभिमान संकल्पाभिधवृत्तिभेदात् बुध्यहंकारमनोलक्षणमन्तःकरणत्रयञ्चेति ।

पशुत्वसम्बन्धात् पशुर्जीवः। स च साञ्जनो निरञ्जनश्चेति द्विविधः। तयोर्मध्ये शरीरेन्द्रियसम्बन्धी साञ्जनः। तद्रहितः निरञ्जनः। समस्तसृष्टि-संहारानुग्रहकारि कारणम्। एतत्तु तत्त्वं महेश्वररूपम्। सोऽयं महेश्वर एव सत्त्वादिगुणभेदेन सृष्ट्यादिक्रियाभेदेन च विभक्त इव भवति । तादृशगुण-कर्मभेदापेक्षयैव पतिरिति साद्य इति च निगद्यते। तत्र निरतिशयदृक्क्रिया-शक्तिमत्वमैश्वर्यम्। तेन चैश्वर्येण नित्यसंबन्धित्वमेव पतित्वम्। आद्यत्वन्त्वना-गन्तुकैश्वर्यसंबन्धित्वम्।

चित्तद्वारेणात्मेश्वरसंबन्धकारणं योगः । स च द्विविधः। क्रिया-लक्षणः, क्रियोपरमलक्षणश्चेति। तत्र जपध्यानादिरूपः क्रियालक्षणो योगः। निष्ठासंविद्गत्यादिसंज्ञितः क्रियोपरमलक्षणः । तत्र महेश्वरे अव्यभिचारिणी-भक्तिर्निष्ठेत्युच्यते। तत्त्वज्ञानं संवित्। शरणगमनं गतिः।

धर्मार्थसाधको व्यापारो विधिः। सोऽपि द्विविधः। प्रधानविधिः गुणविधिश्चेति। तत्र साक्षात् धर्महेतुः प्रधानः। स च प्रधानव्यापारश्चर्या-शब्देनोच्यते। सा च चर्या द्विविधा व्रतं द्वाराणि चेति। तत्र भस्मस्नान, भस्मशयनो, पहार, जप, प्रदक्षिणानि व्रतम्। उपहारश्चनियमः स च षडङ्गः हसित, गीत, नृत्य, हुडुकार, नमस्कार, जप्यषडङ्गोपहारभेदात् । तत्र हसितं नाम कण्ठोष्ठपुटविस्फूर्जनपूर्वकं "अहह" इत्यट्टहासः। गीतंतु गान्धर्वशास्त्रनियमानुसारेण महेश्वरसंबन्धिगुणधर्मादिनिमित्तानां परिचिन्तनम्। नृत्यमपि नाट्यशास्त्रानुरोधेन हस्तपादादीनामुत्क्षेपणादिकं अङ्गप्रत्यङ्गोपाङ्ग-सहितं भावाभावसमेतं प्रयोक्तव्यम्। हुडुकारश्च जिह्वाताल्लुसंयोगात् निष्पाद्य-मानः वृषनादसदृशः पुण्यो नादः। हुडुगिति शब्दानुकारः। इयं व्रतचर्या-

चैकान्तप्रदेशे सम्पादनीया। नमस्कारादिकं तु प्रसिद्धमेव। द्वाराणि च क्राथनस्पन्दनमन्दनशृङ्गारणावितत्करणावितद्भाषणानीति षट् परिकीर्तितानि। तत्रासुप्तस्यैव सुप्तलिङ्गप्रदर्शनं क्राथनम्। सुप्तस्य निद्रितस्य लिङ्गं नेत्रनिमीलनादिकमत्र विवक्षितम्। अत्र बोधाभावो दोषः। एकान्ततासंपादनार्थमेव क्राथनादिद्वारचर्यापेक्ष्यते। वातव्याधिग्रस्तस्येव शरीरावयवानां कम्पनं स्पंदनम्। वस्तुतः सः व्याध्यनभिभूत एव। व्याधिः शरीरदोषः। उपहतपादेन्द्रियस्येव गमनं मंदनम्। रूपलावण्यसंपन्नां कामिनीं निरीक्ष्यात्मानं कामुकमिव यैर्विलासैः प्रदर्शयति तच्छृङ्गारणम्। वस्तुतस्त्वकामुक एव सः। अत्रोन्मत्तता मनोदोषः। अवितत्करणन्तु युक्तायुक्तविवेकविकलस्येव लोकनिन्दितकर्मकरणम्। व्याहतापार्थकादिशब्दोच्चारणमवितद्भाषणमिति। गुणभूतस्तुविधिश्चर्यानुग्राहकोऽनुस्नानादिः भैक्ष्योच्छिष्टादिनिर्मितायोग्यताप्रत्यवायनिवृत्यर्थः। पूर्वोक्तपञ्चपदार्थेष्वन्तिमपदार्थो दुःखान्तोऽपि द्विविधः अनात्मकः सात्मकश्चेति। तत्रानात्मकः सर्वदुःखानामत्यन्तोच्छेदरूपः। "अविशिष्टं वस्तु तावदसत्कल्पं निगद्यते" इति न्यायात् केवलदुःखनिवृत्तेः पाषणस्येवाकिञ्चित्करत्वादैश्वर्यराहित्याच्चायमनात्मकत्वेन व्यवह्रियते। अयमपरो मोक्ष इति च भण्यते। अस्माद्विलक्षणः सात्मको मोक्षः परमोक्षत्वेन व्यपदिश्यते। दृक्क्रियाशक्तिलक्षणैश्वर्यात्मकस्तु मोक्षः सात्मक इत्युच्यते। ऐश्वर्यं तु द्विविधं दृक्शक्तिरूपं क्रियाशक्तिरूपञ्चेति। दृक्शक्तिरेव धीशक्तिः ज्ञानशक्तिश्चेति कथ्यते। तत्र धीशक्तिरेकापि विषयभेदात् दर्शनं, श्रवणं, मननं, विज्ञानं सर्वज्ञत्वञ्चेति पञ्चविधा व्यवह्रियते। क्रियाशक्तिरेकापि मनोजवित्वं, कामरूपित्वं, विकरणधर्मित्वञ्चेति त्रिविधा परिगण्यते।

दर्शनान्तरवैलक्षण्यमस्मिन्दर्शने यथा—न्यायशास्त्रे एकविंशतिदुःखध्वंसो मोक्षः। तथाच तत्र दुःखनिवृत्तेरेव दुःखान्तत्वम्। पाशुपतशास्त्रे तु दुःखनिवृत्तिः पारमैश्वर्यप्राप्तिश्चेत्युभयं विवक्षितम्। न्यायदर्शने पूर्वमविद्यमानं पश्चात्कारकव्यापारेण यदुत्पद्यते तत्कार्यमित्युच्यते। पाशुपतमते तु नित्यमपि

जीवपरमाण्वादिरूपं कार्यमिति कथ्यते । अन्यत्र तु सापेक्षं कारणम् । अत्र तु कर्मादिनिरपेक्षो भगवान् परमेश्वरः जगत्कारणमिति भेदः ।

तदेवमचिन्त्यशक्तिकस्येश्वरस्येच्छानुविधायिन्यव्याहतक्रियाशक्त्या कार्यकारित्वाभ्युपगमात् निरपेक्षो भगवानेव जगत्कारणमिति तत्सिद्धान्तः ।

तदुक्तम्—

कर्मादिनिरपेक्षस्तु स्वेच्छाचारी यतोह्ययम् ।
ततःकारणतः शास्त्रे सर्वकारणकारणम् ॥ इति ॥

तस्मात्पाशुपतागमेन यथावत्तत्त्वनिश्चयोदयात् पुरुषार्थकामैः पुरुषधौरेयैः पञ्चार्थप्रतिपादनपरं पाशुपतशास्त्रमेवादरणीयमिति वदन्ति ।

॥ इति पाशुपतमतभङ्गः ॥

# ॥ अथ शैवमतभङ्गः ॥

जीवीयकर्मनिरपेक्षस्य सर्वतन्त्रस्वतंत्रस्य परमेश्वरस्य कारणत्वपक्षे वैषम्य-नैर्घृण्यदोषप्रसञ्जनात् तत्पक्षप्रतिक्षेपपरायणाः केचन माहेश्वराः शैवागमसिद्धान्त-तत्त्वं प्रतिपादयन्तः पुरुषकर्मसापेक्ष एव परमेश्वरो जगत्कारणमिति पक्षान्तर-मभ्युपगच्छन्ति। तद्यथा—पदार्थास्त्रयः पतिः, पशुः पाशश्चेति। तत्र पतिः स्वतन्त्रः परमशिवः। पशुः पुरुषः कर्तृत्वभोक्तृत्वशक्तिसम्पन्नः परमशिव-साम्यस्वरूपयोग्यः। पाशस्तु मलः, कर्म, माया, महामाया, रोधशक्तिरिति पञ्चप्रकारः। तत्प्रपञ्चनं यथा—मलः पुरुषस्य स्वाभाविकी अनादिरशुद्धिः। कर्म-धर्माधर्मौ। माया-कालनियत्यादित्रिंशत्तत्वात्मिका। महामाया-बिन्दु-शिवतत्त्वादिपदवाच्यशुद्धाध्वोपादानभूता। रोधशक्तिः-पुरुषस्य ज्ञानक्रिया-शक्त्योराच्छादिका परमशिवसंबन्धिनी शक्तिः। अथैतस्मिन् दर्शने मोक्ष-साधनीभूतज्ञानविषयत्वेन हेतुना तत्त्वभूताः पतिपशुपाशरूपास्त्रयः पदार्था निरूप्यन्ते। सर्वज्ञत्वादिकैः सर्वैर्गुणैर्युक्तं सर्वशक्तिसमन्वितं जगद्विचित्र-रचनाकर्तारं दोषवर्जितं सदाशिवमेते शैवाः प्रतिपादयन्ति।

परिदृश्यमानानां तनुभवनादीनां भावानां सन्निवेशविशिष्टत्वेन कार्यत्वमवगम्यते। मुक्तात्मनान्तु विद्येश्वरादीनां शिवत्वे विद्यमानेऽपि परमेश्वर-पारतन्त्र्यात् स्वातन्त्र्यं परं नाभ्युपगम्यते। मुक्तात्मानां पारतन्त्र्यमनभ्युप-गच्छन्तः केचन माहेश्वराः परमशिवस्य जगन्निर्माणे प्राणिकर्मानपेक्षत्व-मुद्घोषयन्ति। शैवदर्शनेतु वैषम्यादिदोषपरिहाराय तत्सापेक्षत्वमित्यनयो-दर्शनयोर्वैलक्षण्यं सूक्ष्ममीक्ष्यते। प्राणिकृतकर्मसापेक्षत्वेन परमेश्वरस्य जगत्कर्तृ-त्वांगीकारेऽपि तदीयस्वातन्त्र्यादेः क्षतिः काचिदपि नास्तीति तेऽभि-प्रयन्ति। करणापेक्षया कर्तुः स्वातन्त्र्यप्रच्युतेरदर्शनाद्द्रव्यदानविषये कोशा-ध्यक्षापेक्षस्य प्रभोः प्रसादादिना दानस्वातन्त्र्यदर्शनाच्च न कश्चिद्दोष इति तेषामभिप्रायः। पारिभाषिकमेव महेश्वरस्य स्वातन्त्र्यमेतैर्विवक्षितम्। प्रयोजक-

शून्यत्वं हि तत्। प्रयोजकश्च स्वानभीप्सितकार्यप्रवर्तकः स्वापेक्षितकार्यविघातकश्चेति द्विविधश्चेतन एवात्र विवक्षितः। तेन जडस्य कर्मणः प्रयोजकत्वविवक्षायामपि नेश्वरस्य स्वातन्त्र्यहानिः। एवञ्च दर्शितप्रयोजकशून्यत्वे सति करणादिकारकसमुदायप्रयोक्तृत्वरूपमेव स्वातन्त्र्यं न तु कर्माद्यनपेक्षत्वरूपमिति तेषामाशयः।

अस्मिन्सिद्धान्ते षट्त्रिंशत्तत्वान्यंगीकृतानि। परमशिवस्तु सर्वतत्त्वातीतः। तस्य च मायादिपाशासंभवात् प्राकृतं शरीरं न विद्यते। शाक्तं हि तदीय शरीरम्।

ईशानादिभिः पञ्चभिर्मन्त्रैः शक्तिरूपैर्मस्तकादिकल्पनायां "ईशानमस्तकः, तत्पुरुषवक्त्रः अघोरहृदयः, वामदेवगुह्यः, सद्योजातपादः, परमशिवः" इति प्रसिद्धिः दृश्यते। मन्त्रमये च शरीरे शरीरावयवा मन्त्ररूपा एव वक्तव्याः। मन्त्राणान्तु शक्तिरूपत्वं सिद्धम्। तत्रेशान इति मन्त्रो (म. ना. २१) मस्तकस्थानीयः। तत्पुरुषाय (म. ना. २०) इति मन्त्रो मुखस्थानीयः। अघोरेभ्य (म. ना. १९) इति मन्त्रो हृदयस्थानीयः। वामदेवाय (म. ना. १८) इति मन्त्रो गुह्यस्थानीयः। सद्योजातं (म. ना. १७) इति मंत्रो पादस्थानीयः।

अस्मदादिशरीरविलक्षणं अनुग्रह, तिरोभाव, सृष्टि, स्थिति, संहाररूप, कृत्यपञ्चककारणं स्वेच्छानिर्मितं परमशिवस्य शक्तिमयं शरीरम्।

तदुक्तम्—"मलाद्यसंभवाच्छाक्तं वपुर्नैतादृशंविभोः" इति।

तद्वपुः पञ्चभिर्मन्त्रैः पञ्चकृत्योपयोगिभिः॥
ईशतत्पुरुषाघोरवामाद्यैर्मस्तकादिमत्॥ इति च॥

सर्वतत्त्वातीतः परमशिवस्त्वनादिमुक्तः। मुक्तात्मानोऽपि शिवा एव। ते तु आदिमुक्ताः।

महाप्रलये च तत्त्वत्रयमवशिष्यते। तत्तु माया, पुरुषः, शिव इत्यन्योन्यं विभक्तं वर्तते। सृष्टिस्तु शुद्धाध्वा, कृच्छाध्वा चेति द्विविधा।

शुद्धाध्वनि महामायाभिधानं बिन्दुपदवाच्यं शिवतत्त्वं शक्तितत्त्व, सदाशिवतत्त्वेश्वरतत्त्व, विद्यातत्त्वभेदेन चतुर्विधतत्वात्मना परिणम्य पञ्चतत्त्वात्मकं भवति। शिवतत्वन्तु तत्रादिकारणं जडात्मकं शुद्धाध्वमूलकारणम्। एतच्च व्यापकं निरवयवं नित्यं ज्ञानक्रियास्वभावमुच्यते। एतदेवावरणं मुक्तिभाजां ज्ञानक्रिये प्रकटयति। स एव बिन्दुरित्युच्यते। सैव महामाया। तदेतत्परमशिवस्य परिग्रहशक्तिरिति कथ्यते। शक्तितत्त्वन्तु शिवस्य प्रथमः परिणामः। ज्ञानक्रियाशक्तिं निमित्तीकृत्य शक्तितत्वव्यवहितः परिणामः सदाशिवतत्वम्। अशुद्धाध्वनि सृष्ट्यादीनां कर्तृभूतानामनन्तादीनामधिष्ठानेन परमशिवस्य क्रियाशक्तिबहुलमीश्वरतत्त्वम्। अत्रैव विद्येशानामनन्तादीनामन्तर्भावः।

विद्याख्यं तु पञ्चम तत्त्वं सप्तकोटिमहामन्त्राधिष्ठानेन परमशिवस्य ज्ञानशक्त्या प्रचुरम्। अत्रैव व्योमव्याप्त्यादीनां विद्यानां कामिकादीनामष्टादशतन्त्राणामन्तर्भावः।

एतेष्वेव शक्त्यादितत्त्वेषु विचित्रभुवनादिसन्निवेशाः सन्ति।

कृच्छ्राध्वनि मायातत्त्व त्रिंशत्तत्त्वात्मकं भवति। तानि च यथा— माया, कालो, नियतिः, कला, विद्या रागश्चेति षट्तत्त्वानि। तत्रापि कालेन नियत्या च सहकृता कला प्रकृतिमहदहङ्कारैकादशेन्द्रियपञ्चतन्मात्रपञ्चभूतभेदेन चतुर्विंशतितत्त्वात्मना परिणमते। आहत्य त्रिंशत्तत्त्वानि। मायाकार्यं सर्वमप्यशुद्धम्। महामायाकार्यं तु शुद्धमेव। तत्र सर्वशक्तिसमाहारात्मिका सर्वकारणावस्था वस्तुभूता मायेत्युच्यते।

कालश्च क्षणदिनमासात्मकः प्रसिद्धः। नियतिस्तु नियमनरूपा शक्तिः। कला च पुरुषस्य कर्तृशक्तिव्यञ्जिका काचिच्छक्तिः। विद्या पुरुषस्य विषयप्रकाशननिमित्तभूता इन्द्रियादिकरणस्थानीया ज्ञानशक्तिव्यञ्जिका शक्तिः। रागः आसक्तिः पुरुषप्रवृत्तिहेतुः। पुरुष एव पशुः। स च त्रिविधः। विज्ञानाकलः, प्रलयाकलः, सकलश्चेति। तेषु विज्ञानाकलः मलमात्रयुक्तः अत एव एकबन्ध

इत्युच्यते । द्वितीयस्तु प्रलयाकलः मलकर्मयुक्तत्वाद्द्विबन्ध इत्युच्यते । तृतीयः मलकर्ममायायुक्तः सकलः बन्धत्रयसहित इति निगद्यते । तत्रापि प्रथमः समाप्तकलुषासमाप्तकलुषभेदात् द्विप्रकारः । तयोः पक्कमलान् परमशिवः बैन्दवशरीरयोगिनः कृत्वा विद्येशत्वं, सर्वज्ञत्वं, शुद्धाध्वाधिष्ठातृत्व, पञ्चकृत्याधिकारं च तेभ्यो ददाति । अन्यान् महामन्त्राधिदेवान् विद्यातत्त्वनिवासिनः करोति । द्वितीयः प्रलयाकलोऽपि पक्कपाशद्वयः तद्विलक्षणश्चेति द्विविधः । तयोर्मध्ये प्रथमः मोक्षं प्राप्नोति । द्वितीयस्तु कर्मवशात् नानाविधजन्मभाग्भवति । तृतीयः सकलोऽपि द्विविधः । पक्ककलुषः अपक्ककलुषश्चेति । तयोराद्यान् परमेश्वरः तत्परिपाकपरिपाट्या मण्डल्याद्यष्टादशोत्तरशतमन्त्रेश्वरपदं प्रापयति ! अपक्ककलुषान् कर्मवशात् भोगभाजो विधत्ते । इति ॥

## प्रत्यभिज्ञादर्शनपरिचयः

निरुपादानसंभारमभित्तावेव तन्वते । जगच्चित्रं नमस्तस्मै कलाश्लाघ्यायशूलिने ॥ इति वसुगुप्ताचार्यमार्गमनुसरन्तः केचन माहेश्वराः परमेश्वरस्य कर्मादिनिरपेक्षस्य स्वेच्छयैव चेतनाचेतनात्मकजगन्निर्मापकत्वमाघोषयन्तः प्रत्यभिज्ञामात्रं सर्वसुलभमभिनवं परापरसिध्युपायमभ्युपगच्छन्तः प्रत्यभिज्ञाशास्त्रं परमप्रमाणं मन्वते । अहमीश्वर एव नान्य इत्येवंरूपो यः साक्षात्कारः स प्रत्यभिज्ञेत्युच्यते । तेन प्रत्यभिज्ञामात्रेणैव परशब्दितामुक्तिरपरमुक्तिश्चाभ्युदयो देवलोकप्राप्त्यादिश्च भवति । परमेश्वरस्य जगन्निर्माणे कर्मावलम्बित्वे पूर्णस्वातन्त्र्यभङ्गापत्तेस्तदनपेक्षस्यैव जगत्कारणत्वमभ्युपगन्तव्यम् । अतो निरपेक्षः परमेश्वरः स्वेच्छयैव केवलमाकाशादिभावान्वितं जगन्निर्मिमीते । चेतनाचेतनात्मकं सर्वमिदं जगन्न परमेश्वरापेक्षया पृथग्भूतम् । किन्तु तदन्तर्गतमेव । परमेश्वरः स्वेच्छयैवाकाशादीन् भावान् स्वात्मन्येव दर्पणे प्रतिबिम्बमिवावभासयति । नानाविधमानमेयादिभिन्नमिदं जगत्परमेश्वरापेक्षया न किञ्चिद्भिन्नम् । परमेश्वरस्य जीवतादात्म्यमपि स्वसंवेदनेनोपपत्त्या आगमेन च सिध्यतीति सोऽयं परमेश्वरपरिणामवादो भेदाभेदलक्षण इति ॥

तदेतत्पशुपतिपारम्यवादिनां पाशुपतानां मतं श्रुतिस्मृत्यादिविरुद्धत्वादप्रामाणिकमिति तन्निराकृतं भगवता बादरायणेन ब्रह्ममीमांसाशास्त्रे द्वितीयाध्याये द्वितीयपादे (समयपादे) एकादशाधिकरणे "पत्युरसामञ्जस्यात्" इत्यादिना "अन्तवत्त्वमसर्वज्ञता वा" इत्यन्तेन सूत्रपञ्चकेन। तद्यथा ॐ पत्युरसामञ्जस्यात् ॐ पत्युः पशुपतेर्जगत्कारणत्वं न युक्तम्। कुतः ? असामञ्जस्यात् पारतन्त्र्यजननमरणादिदोषित्वादित्यर्थः। तच्च श्रुत्यादिसिद्धमिति भावः। यथा

"यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्।"
(ऋ. १०-१२५-५)

"अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्त वा उ।"
(ऋ. १०-१२५-६)

इति यमित्याद्यम्भृणीवाक्येन शिवादेः पराधीनपदप्राप्तिमत्त्वावगमेन पारतन्त्र्याख्यदोषोऽवगम्यते। पारतन्त्र्याज्ञानजननमरणादिषु दोषेषु सत्सु जगत्कारणत्वासम्भवात्। तदर्थो यथा — अहं यं यं उग्रं रुद्रं कर्तुं कामये तं तं योग्यं उग्रं रुद्र कृणोमि करोमि। तथा त ब्रह्माण ऋषि सुमेधसं च तत्तद्भावयोग्यं करोमि। अहं 'शरवे' हिंसाशीलाय 'ब्रह्मद्विषे' चतुर्मुखपञ्चममुखच्छेत्रे संहारकाले ब्राह्मणादिसर्वप्राणिविद्विषे इति वा ब्रह्मद्विषां दैत्यानां 'शरवे' 'हिंसकाये'ति वा दक्षप्रजापतिहिंसकाय इति वा रुद्राय (द्वितीयार्थे चतुर्थी) उक्तविशेषणकरुद्रं 'हन्त वा उ' हन्तुमेव, न तु भीषणाद्यर्थम्, प्रलये दुर्गारूपेण हननात्। धनुः 'आतनोमि' विस्तारयामि। सज्यं करोमीति वा। अहं 'जनाय' जनस्य 'समदं' सम्मदं हर्षं सन्ततमोदं वा करोमि। अहं 'द्यावा पृथिवी' तदुपलक्षितानूर्ध्वाधोलोकान् धारणाय 'आविवेश' छन्दसि परोक्षे लिट्। अहमस्य जगतः 'पितरं' ब्रह्माणं 'मूर्धन्' 'मूर्धनि' सर्वजीवोत्कृष्टत्वे। सुवे जनयामि। न केवलं पदे स्थापयामि। एवं भूतायाः मम 'योनिः' कारणं 'समुद्रे अप्सु' अपामन्तस्तिष्ठति। स्त्रीणां पतिनामग्रहणमनुचितमिति शिक्षणाय नारायण इत्यनुक्त्वा 'आपो नारा' इत्यादिनोक्तं तदर्थमेवाह।

एवं 'अस्य देवस्य मीळ्हुषो वया विष्णोरेषस्य प्रभृथे हविर्भिः। विदेहि रुद्रो रुद्रियं महित्वं यासिष्टं वर्तिरश्विनाविरावत्'। (ऋ. ७-४०-५)

अस्यार्थो यथा—'अस्य' प्रमितस्य 'देवस्य' द्योतनादिगुणततेः 'मिळ्हुषः' भक्ताभिलषितवर्षितुः (समर्थस्येति वा) एषस्य—आसमन्तादीशस्य, व्यत्ययेन शकारस्य षकारः। 'इषु इच्छायां' इत्यस्माद्भावे घञिगुणे एषस्य इच्छारूपस्य सत्यकामस्येति वा, विष्णोः 'प्रभृथे' कर्मणा ध्यानेन च प्रवृद्धे भरणे पूजने हविर्भिः कृते सति, तत्प्रसादात् 'वयाः' अहंतत्त्वाभिमानित्वेन जनानां बन्धको रुद्रः 'रुद्रियं महित्व' रौद्रं पद 'विदे' विविदे लेभे हि प्रसिद्धमेतत्। तथा हि 'अश्विनौ' युवामपि विष्णुपूजयैव तत्प्रसादात् 'इरावत्' अन्नवत् 'वर्तिः' वर्तनं समस्तभोगवत्पद 'यासिष्टं' अयासिष्टं प्राप्तवन्तौ स्थ इति। तथा 'एको नारायण आसीन्न ब्रह्मा नेशानो नाग्नीषोमौ' (महोप १) अस्यार्थो यथा—'महाप्रलये नारायण एक एव प्रधान आसीत् तदा स्वातन्त्र्येण 'न ब्रह्मा' न चतुर्मुख आसीत् 'नेशानो' रुद्रश्च नासीदित्यर्थः। युक्त्यान्तरेण पशुपतेर्जगत्कारणत्व पराकुर्वत्सूत्रं यथा—

ॐ सम्बन्धानुपपत्तेश्च ॐ

पत्युरीश्वरस्याशरीरत्वात्तस्य जगता कार्यकर्तृभावसंबन्धानुपपत्तेर्न कर्तृत्वमित्यर्थः।

ॐ अधिष्ठानानुपपत्तेश्च ॐ

महाप्रलये सर्वेषां नष्टत्वात् पुनः सृष्टिकाले पृथिव्याद्याश्रयानुपपत्तेश्च न तस्य जगत्कर्तृत्वमित्यर्थः। पृथिव्याद्यधिष्ठाने स्थितो हि कुलालादिः कार्यं करोति। नास्य महादेवस्य तदा तदस्तीति यावत्। अतश्च न जगत्कर्तृत्वमित्यर्थः॥

ॐ करणवच्चेन्न भोगादिभ्यः ॐ

करणमिति देह उच्यते। जीवस्य कार्यजनने तस्य सहकारित्वात्। अस्मदादिशरीरवदिदं कारकजातं साक्षात्प्रयत्नाधिष्ठेयतया पत्युरीश्वरस्य शरीररूपमधिष्ठानरूपं चेति न संबन्धानुपपत्त्यादिदोष इति चेन्न। भोगादिभ्यः सुखदुःखानुभवरूपभोगोत्पत्तिमरणाख्यदोषेभ्यो न तस्य जगत्कर्तृत्वमिति।

ॐ अन्तवत्वमसर्वज्ञाता वा ॐ

जगत्कारणत्वेनाङ्गीकृतः शिवो देहवान्न वा । आद्ये अन्तवत्वं नाशवत्वं, अन्त्ये असर्वज्ञता च स्यात् । अशरीरिणो ज्ञानस्यैवाभावात् । न हि तादृशस्य चैत्रादिवत्कर्तृत्वं युक्तमिति भावः। एतेन लीलाविग्रहोपादानमस्तीत्यपि प्रत्युक्तम्। तस्यापि देहत्वेन मरणरूपान्तवत्वानिस्तारात् । तथाच यं कामये तं तमुग्रं कृणोमीत्यादिश्रुत्यादिभिः शिवस्य पारतन्त्र्याद्यवगमात् तस्याशरीरतया प्रलये भूतानां विलीनत्वेन सृष्टिकाले पृथिव्याद्यधिष्ठानाभावेन कर्तृत्वायोगेन कारकजातस्यैव साक्षात्प्रयत्नाधिष्ठेयतया देहादिविनाशित्वस्य दुःखादिभोगस्य चापत्तेः शिवस्य जगत्कर्तृत्वे मानाभावाच्च पाशुपतमतस्यानेकदोषदुष्टत्वात्प्रेक्षावदनुपादेयत्वमपरिहार्यमेव । तदेवं शाक्तेयसौरस्कान्दगाणपतभेदेन बहुविधेषु वैदिकाभासेषु मध्ये पाशुपतमतस्यापि प्रविष्टत्वातन्निरूपिताश्चान्या अपि प्रक्रियाः सर्वाः श्रुतितदनुसारिस्मृतिविरुद्धत्वान्नोपादेया इति स्थितम् ।

यद्यपि तत्र तत्र पुराणादिषु परमशिवस्य विष्णवपेक्षयोत्कृष्टत्वेन परब्रह्मत्वं जगत्कारणत्वं च प्रतिपादितमापाततः प्रतीयते। तथापि तेषां सर्वश्रुतितदनुसारिस्मृतिविरुद्धत्वादप्रामाण्यं व्यवस्थाप्य श्रीमद्विजयीन्द्रश्रीमच्चरणैस्सर्वतन्त्रस्वतन्त्रैर्विष्णोश्चेतनाचेतनात्मकसर्वजगन्निमित्तकारणत्वमनन्तकल्याणगुणपरिपूर्णत्वं सकलदोषविदूरत्वं परब्रह्मत्वं च निरवकाशप्रमाणपुञ्जप्रदर्शनपुरस्सरं न्यायमौक्तिकमालायां शैवसर्वस्वखण्डने निरणायि । अतस्तदीयवचनान्येवास्मिन्संदर्भे पाशुपतनिराकरणावसरे जिज्ञासुजनविचिकित्सानिस्सारणायोदाह्रियन्ते तथाहि ॥

# ॥ शैवसर्वस्वखण्डनम् ॥

## ( न्यायमौक्तिकमालायाम् )

जगद्गुरु-सर्वतन्त्रस्वतन्त्र श्रीमद्विजयीन्द्रतीर्थश्रीपादविरचितम्

परस्परं विवदमानयोर्ब्रह्मनारायणयोर्मध्ये महालिङ्गाकारेण प्रादुर्भूतेन परमशिवेन तद्बलपरीक्षार्थं तल्लिङ्गमूलाग्रदर्शनाय प्रेरितयोर्वराह हंसरूपेण तदर्थं प्रवृत्तयोस्तद्दर्शनाऽलाभेन तदपेक्षया शिव एवोत्कृष्ट इत्यस्य ॥ १ ॥

विष्णुर्जलन्धरवधार्थं सुदर्शनमाकांक्षमाणः प्रतिदिनं पङ्कजानां सहस्रेण शिवमाराधयिता, तत्परीक्षार्थं कदाचिदेकपङ्कजे गोपायिते ततः स्वोद्धृतेन स्वनेत्रकमलेन शिवाराधने प्रवृत्तः ततः शिवप्रसादात्सुदर्शनं पुण्डरीकाक्षत्वं च प्राप्य तेन सुदर्शनेन जलन्धरमजयदित्यस्य ॥ २ ॥

अमृतमथनकाले कालकूटविषोद्भवे तन्नियमनाशक्ततया विष्ण्वादिषु पलायनपरेषु सर्वलोकरक्षार्थं शिवस्तादृशविषं पीतवानित्यस्य ॥३॥

विष्ण्वादीनि युद्धसाधनानि कृत्वा शिवस्तदसाध्यत्रिपुराण्यजयदित्यस्य ॥ ४ ॥

दक्षाध्वरभङ्गे हरिणरूपेण द्रुततरं भीत्या गच्छतो विष्णोः शिवावतारभूतवीरभद्रेण पराजय इत्यस्य ॥ ५ ॥

"सत्यं सत्यं पुनस्सत्यं उद्धृत्य भुजमुच्यते । वेदशास्त्रात्परं नास्ति न दैवं केशवात्परम्" इति सर्वऋषिसभामध्ये वदतो वेदव्यासस्य भुजः स्तब्धोऽभूदित्यस्य ॥ ६ ॥

दारुकावनादौ विष्णुशिवयोस्स्त्री-पुरुषरूपेण सञ्चार इत्यस्य ॥ ७ ॥

हिरण्यासुर(हिरण्यकशिपु)वधार्थे प्रवृत्तं नृसिंहं रुद्रः शरभरूपेणावधीदित्यस्य ॥ ८ ॥

रामचन्द्रेण रावणवधजनितब्रह्महत्यापनुत्तये सेतौ लिङ्गप्रतिष्ठा-तत्पूजादिकं कृतमित्यस्य ॥ ९॥

कृष्णस्य शिववरप्रदानेन पुत्रप्राप्तिर्जातेत्यादेश्च ॥ १०॥

तत्र तत्र पुराणादिषु प्रतिपादनेन शिवस्यैव विष्ण्वपेक्षयोत्कृष्टत्वेन परब्रह्मत्वं परमकारणत्वं चोचितम्। मोक्षप्रदस्य काशीक्षेत्रस्य शिवक्षेत्र-त्वादिप्रसिद्धेः शिवस्यैव मोक्षप्रदातृत्वेन मुमुक्षूपास्यत्वं चेति ॥ ११॥

तदसत्। उत्कृष्टस्य (हरिसर्वोत्तमत्वादिरूपस्य) सर्वस्याप्यर्थस्य सात्विकपुराणेषु प्रतिपादनेन तदन्येषूक्तविरुद्धार्थप्रतिपादनेन परीक्षका-नादरणीयत्वात्। किञ्च विष्णुचतुर्मुखयोर्वराहहंसरूपयोः शिवलिङ्ग-मूलाग्रादर्शनं कौर्मलैंग-शिवरात्रिमाहात्म्यादिषु प्रतिपाद्यते। तेषां तामसपुराणत्वं प्रसिद्धमेव। किञ्च "उद्धृतासि वराहेण कृष्णेन शतबाहुना"। आपो वा इदमग्रे सलिलमासीत् तस्मिन्प्रजापतिर्वायु-र्भूत्वाचरत्स इमां अपश्यत्। तां वराहो भूत्वाऽहरत्" इत्यादिश्रुति-विरोधः। तत्र सकलभूतभौतिकाद्याश्रयपृथिव्या उद्धरणं विष्णुना कृतमित्यावेदनात्। तादृशलिङ्गस्यापि पार्थिवत्वात्। तस्या पृथिवीत्वेऽ-प्राकृतत्वे ऊर्ध्वाधोदेशावच्छेदेनापरिच्छिन्नत्वे च प्रमाणाभावात्। न च विष्णोर्लिङ्गमूलापरिज्ञानेनैव तत्कल्पनमिति वाच्यम्। विष्णोस्सर्वज्ञ-त्वप्रतिपादकश्रुतेः विरोधात्। "विचित्रशक्तिः पुरुषः पुराणो न चान्येषां शक्तयस्तादृशास्स्युः" इत्यादिविष्णुविचित्रशक्त्याद्यावेदक-श्रुतिविरोधात् ॥ १॥

विष्णोः शिवप्रसादेन जलन्धरवधार्थं सुदर्शनप्राप्त्यादिकमसंगतम्, "चरणं पवित्रम्" (प्रहाना ५–१० सु. द.) इत्यादि श्रुतिविरुद्धम्। असङ्गतं पुण्डरीकाक्षत्वप्राप्त्यादिकमपि। "तस्य यथा कप्यासं पुण्डरीक-मेवाक्षिणी तस्योदिति नाम स एव सर्वेभ्यः पाप्मभ्य उदितः" इत्यादि (छा. १–६–७) श्रुतिविरुद्धम्। तत्र भगवद्विग्रहमात्रस्याप्राकृतत्वे-नानाद्यनन्तत्वसमर्थनात्। यद्यपि लिङ्गपुराणादिष्विव वराहपुराण-पूर्वखण्डेऽपि विष्णोर्जलन्धरवधार्थं शिवपूजा-सुदर्शन-पुण्डरीकाक्षत्व-

प्राप्त्यादिकमावेद्यते। तथापि पाद्मादिषु सात्विक-राजस-तामसत्वादिवत् वाराहेऽपि पूर्वखण्डस्य तामसत्वोपगमान्न दोषः ॥ २॥

अमृतमथनकाले कालकूटविषपानमपि शिवेन न स्वशक्तिमात्रकृतम्। किन्तु विष्णुतन्मन्त्रजपमहिम्नैव। न चात्र प्रमाणाभावः। "तं दृष्ट्वा घोरसङ्काशं प्रादुर्भूतं महाविषम्। ध्यात्वा नारायणं देवं हृदये गरुडध्वजम्॥" इति ब्रह्माण्डपुराणवचनस्य सत्वात्। "येन जीर्णं च गरळं कण्ठस्थं च कपालिनः। अन्तरात्मधृतं तस्य हृदये गरुडध्वज" मिति पुराणान्तरवचनस्य सत्वात्। "अप्रकाशमिदं देवि गुह्याद्गुह्यातरं पदम्। पुराहमब्धिमथने पतगेन्द्रविषावहम्। अवध्यं गरलं घोरमभुञ्जमसृतं यथा॥" इति गारुडपुराणे पार्वतीं प्रति शिववचनाच्च। "अच्युतानन्तगोविन्दमन्त्रतोऽप्सु शुभं परम्। ॐ नमस्सम्पुटीकृत्य जपन्विषधरोऽहरत्" इति मन्त्रशास्त्रेषु प्रतिपादनाच्च। "नामत्रयप्रभावाच्च विष्णोस्सर्वगतस्य वै। विषं तद्भवज्जीर्णं लोकसंहारकारण" मिति पुराणान्तरवचनदर्शनाच्च। किं बहुना?—"वायुरस्मा उपामन्थत्पिनिष्टस्माकुवन्नमा। केशी विषस्य पात्रेण यद्रुद्रेणापिबत्सहे"ति श्रुत्यावायोरेव विषपानकर्तृत्वस्य शिवस्य शिष्टकिञ्चिद्विषपानकर्तृत्वस्यावेदनाच्च। किञ्च, भागवतादिषु अमृतमथनप्रकरणेषु विष्णोः कालकूटविषभीत्या पलायनाद्यनुक्तेश्च ॥ ३॥

त्रिपुरविजयोऽपि न रुद्रोत्कर्षप्रतिपादकः। यद्यपि "तेषामसुराणां तिस्रःपुर आसन् क इमामशिष्यतीति रुद्र इत्यब्रुवन्" इत्यादिश्रुतिष्वेव शिवस्यैव त्रिपुरविजयः विष्णवादीनां तेजनादियुद्धसाधनतया तदुपसर्जनत्वं श्रूयते। तथापि विष्णवादीनां शिवोपसर्जनत्वं न स्वाभाविकं, किंतु "अहं वृणे अहमेव पशूनामधिपतिरसानी" तिश्रुत्या शिववरप्रदानलब्धम्। न चात्र प्रमाणाभावः। "ततो मां शरणं गत्वा प्रपेदे निर्भयो भवान्। अहं देवशुको भूत्वा त्रिपुरस्थानघातय"मित्युत्तरत्र कूर्मपुराणे शिवं प्रति विष्णुवचनात्। महाभारते कर्णपर्वणि "विष्णुरात्मा भगवतो रुद्रस्यामिततेजसः। तस्माद्धनुर्जसंस्पर्शं स विषेहे महेश्वरः" इति नारायणस्यैव विशिष्य रुद्रान्तर्यामित्वप्रतिपादनात्।

"अद्वितीयं यथामन्त्रं तारकं ब्रह्मनामकम्। जपित्वा सिद्धिमाप्नोति सत्यं सत्यं वदाम्यहम् ॥ इममेव जपन्मन्त्रं त्र्यम्बकस्त्रिपुरान्तकः" इति स्मृतिवचनाच्च। 'त्रिपुरं (नाशकः) जग्मुषः पूर्वं ब्रह्मणा विष्णुपञ्जरं। शङ्करस्य कुरुश्रेष्ठ रक्षणाय निरूपित'मिति मोक्षधर्मवचनाच्च। किञ्च भागवतादिषु वृषभावतारसिद्धरसास्वादनादिना बहुधा त्रिपुरसंहारोपायकारकत्वावेदनाच्च ॥ ४ ॥

किञ्च दक्षाध्वरभङ्गे हरिणरूपेण द्रुततरं भीत्या गच्छतो विष्णोः शिवावतारभूतवीरभद्रेण पराजय इत्यनुपपन्नम्। दक्षाध्वरे नारायणागमनस्यैवाभावात्। "उपलभ्य पुरैवैतौ भगवानब्जसम्भवः। नारायणश्च विश्वात्मा न तमध्वरमीयतुः" इति दक्षाध्वरे विष्णुचतुर्मुखयोरनागमनप्रतिपादनात्। तामसपुराणे क्वचिदागमनप्रतिपादनेऽपि तस्य भागवतविरुद्धतया अनादरणीयत्वाच्चेति ॥ ५ ॥

"सत्यं सत्यं पुनस्सत्यं भुजमुद्धृत्य चोच्यते। वेदशास्त्रात्परं नास्ति न दैवं केशवात्पर"मिति सर्वऋषिसभामध्ये वदतः व्यासस्य भुजस्स्तब्धोऽभूदित्येतत् स्कान्दपुराणे काशीखण्डे प्रतिपादितम्। तस्य स्कान्दस्य तामसपुराणत्वेन विशिष्यावैदिकत्वज्ञानात्। 'अवैदिकत्रयं ज्ञानं वासिष्ठं सूतसंहिता। काशीखण्डं परित्याज्यं वैदिकस्य विरोधतः' इत्यादिना प्रायेण काशीखण्डस्यावैदिकत्वावेदनेन च उपेक्षणीयत्वम्। किञ्च 'सहोवाच व्यासः पाराशर्यः' (तै. आ. प्र. पा. १, अनु. ९) इत्यादिश्रुत्या व्यासवचनानां प्रामाण्यावेदनात्। तत्र नारायणस्य सर्वस्मात्परत्वप्रतिपादकवचनानां श्रुतिमूलकत्वेन तदप्रामाण्यप्रतिपादककाशीखण्डवचनानां श्रुतिविरुद्धत्वेन अप्रमाणत्वाच्चेति ॥ ६ ॥

किञ्च अमृतविभागकाले देवसंरक्षणार्थं असुरव्यामोहनार्थं च पुरुषोत्तमेन मोहिनीवेषः परिगृहीतः। तदनन्तरं मोहिनीवेषमाश्चर्यभूतं रुद्रः ममापि प्रदर्शयेति विष्णुं प्रति प्रार्थितवान्। अनन्तरं विष्णुना प्रदर्शिते तद्रूपे रुद्रः समीपस्थां पार्वतीं त्यक्त्वा मुग्धस्सन् विगलितरेतःप्रवाहैर्गमनपथमार्द्रीकुर्वन् तामेवाभिससारेति पुराणेष्वावेद्यते। तावता

पुरुषोत्तमस्य न निकर्षः। तद्रूपदर्शनेन तस्य मोहोक्तेः। असुरव्यामोहनार्थं देवसंरक्षणार्थं च पुरुषोत्तमस्यापि मोहकस्त्रीवेषपरिग्रहसंभवात्। मत्स्यकूर्मवराहादिरूपपरिग्रहदर्शनाच्चेति ॥ ७ ॥

किञ्च नृसिंहं रुद्रः शरभो भूत्वावधीदित्येतदपि विचारयामः। तत्र "हिरण्यासुररक्तपानेन उन्मत्तेन नृसिंहेन लोकेषु उपद्रुतेषु सत्सु देवाः तन्नियमनाय शिवं प्रार्थयामासुः। ततः शिवप्रेरितो वीरभद्रश्शरभो भूत्वा नृसिंहपादौ गृहीत्वा भ्रामयामास। ततो नृसिंहस्ताद्रक्तनिर्गमनेन प्रकृतिवशमापन्नः वीरभद्रं तुष्टाव। वीरभद्रोऽपि कदाप्येवंविधं कृत्यं मा कुर्विति विष्णुं नियम्य शिवान्तिकं प्रापेति" स्कान्दपुराणे प्रतिपादितम्। शैवपुराणे तु "रुद्र एव शरभो भूत्वा नृसिंहं जघानेति" प्रतिपादितम्। अत्र विरोधस्स्फुटतरः, स्कान्दशैवपुराणयोस्तामसत्वं च प्रसिद्धम्। किञ्च सात्विकपुराणेषु हिरण्यासुररक्तपानं नृसिंहस्य क्वापि नोक्तम्। किञ्च हिरण्यासुररक्तपानेन नृसिंहस्य मोहप्रतिपादनमप्यसङ्गतम्। 'सर्वभूतस्थमेकं नारायणं कारणरूपं शोकमोहविनिर्मुक्तं विष्णुं ध्यायन्। श्रीर्दधति' (नारा. ४) इति विष्णोर्मोहात्यन्ताभावस्यैवावेदनाच्च। किञ्च सर्वेऽपि लोकाः नृसिंहेनोपद्रुता इत्येतदप्यसङ्गतम्। "परित्राणाय साधूनां विनाशाय च दुष्कृताम्। धर्मसंस्थापनार्थाय सम्भवामि युगे युगे" (भ. गी.) इत्यादिस्मृत्या विष्णववताराणां साधु-परित्राण-दुष्टनिग्रहादिप्रयोजनसत्वावेदनाच्च। किञ्च 'नृसिंहश्शरभेण हतः' इत्यप्यसङ्गतम्। नृसिंहतापनीये—'एष देहान्ते तमसः परमं धाम प्राप्नुयात्। यत्र विरजो नृसिंहो भासते तत्र उपासते। तत्सदृशा मुनयः' इत्यादिना नृसिंहस्य परमपदावस्थायित्वावेदनात्। तापनीयोपक्रमे नृसिंहस्य 'केवलं ज्योतिरेकमनाद्यनन्त'मित्यादिनाऽनाद्यनन्तत्वावेदनाच्च। किंबहुना बहुपुराणेषु नृसिंह एव शरभहन्तेत्यावेद्यते ॥

तथा हि पाद्मे—'तौ युध्यमानौ च चिरं वेगेन बलवत्तमौ। न समं जग्मतुर्देवौ नृसिंहशरभाकृती ॥ ततः क्रुद्धो महाकायो नृसिंहो भीमविक्रमः। सहस्रकरजानत्र तस्य गात्रे न्यवेशयत् ॥ पतितं भीममत्युग्रं नृसिंहः शरभं रुषा। जघान निशितैस्तीक्ष्णैः नखैर्नखवरायुधः ॥ निहते

शरभे तस्मिन् रौद्रे मधुनिषूदनम्। तुष्टुवुः पुण्डरीकाक्षं देवा देवर्षयस्तथे'ति ॥

वामनपुराणे—'निकृत्य बाहूरुशिरा वज्रकल्पमुखैर्नखैः। मेरुपृष्ठे नृसिंहेन शरभश्चाथ सोऽपतत्।' इति ॥

कौर्मे—'स चञ्चुपञ्चाननमष्टपादं पक्षद्वयाढ्यं घननीलगात्रम्। स्फुरन्महातीव्रसहस्रहस्तं सहस्रशास्त्रं शरभस्वरूपम्॥ करादादाय प्रत्येकं मुखं चञ्चुपुटद्वयम्। विदार्य च नृसिंहस्तं हिरण्यकशिपुं यथे'ति ॥

आग्नेयपुराणे चत्वारिंशेऽध्याये—'ततः क्षणेन शरभो नादपूरित दिङ्मुखः। अभ्याशमगमद्विष्णोर्व्यनदद्भैरवस्वनम्॥ स तमभ्यागतं दृष्ट्वा नृसिंहः शरभं रुषा। नखैर्विदारयामास हिरण्यकशिपुं यथे'ति ॥

किञ्च 'हरिं हरन्तमनुयन्ति देवाः। विश्वस्येशानं वृषभं मतीना' (महाना. १२-११) मिति श्रुतौ ईशानशब्दितस्य रुद्रस्य नृसिंहहतत्वमावेद्यते। विश्वस्येति प्रथमार्थे षष्ठी। विश्वेदेवाः, ईशानं रुद्रं हरन्तं संहरन्तं हरिं अनुयन्तीति तच्छ्रुत्यर्थविज्ञानात्। न च हरिं हरन्तं ईशानं विश्वेदेवा अनुयन्तीत्यन्वयोऽस्त्विति वाच्यम्। 'ब्रह्माणमिन्द्रं रुद्रं च यमं वरुणमेव च। निहत्य हरते यस्मात्तस्माद्धरिरिहोच्यते' इति स्मृत्या ब्रह्मेशानादिहन्तृत्वस्यैव हरिशब्दप्रवृत्तिनिमित्तत्वेन तादृशान्वयाङ्गीकारायोगात्॥ न चैवं हरन्तमित्यस्य वैयर्थ्यम्। हरिशब्दो न केवलं रूढः किन्तु यौगिकोऽपीत्यर्थज्ञापनेन तद्वैयर्थ्योपपत्तेः।

न च किञ्च 'तस्येन्द्रो वम्रिरूपेण धनुर्ज्यामच्छिनत्स्वयम्' इत्युपक्रम्य 'एतद्रुद्रस्य धनुः। रुद्रस्यत्वेव धनुरार्त्निः शिर उत्पिपेष। स प्रवर्ग्योऽभवत्' इति तैत्तिरीयारण्यके विष्णुप्रेरितेनेन्द्रेण रुद्रशिरश्छेदः कृतः इति प्रतिपाद्यते। न चेन्द्रस्य रुद्रशिरःछेदः अनेकप्रमाणबाधित इति धनुस्त्रिशिरसम्बन्धितया निर्दिश्यमानस्य रुद्रशब्दस्य प्रसिद्धरुद्रान्ययक्षपरत्वमेवेति सामगैरधीयमानत्वादिति वाच्यम्। पूर्वोक्तश्रुतिस्मृत्यनुसारेण रुद्रशब्दस्य प्रसिद्धरुद्रपरत्वस्यैव न्याय्यत्वात्। प्रसिद्धेन्द्रस्य रुद्रशिरश्छेदसामर्थ्याभावेऽपि विष्णुचक्रसहकारेण विष्णुसह-

कारेण चेन्द्रस्य रुद्रशिरच्छेदसामर्थ्यसम्भवात्। न चात्र प्रमाणाभावः। 'रक्षितुं नैव शक्नोषि स्वात्मानमपि शङ्कर। युद्धे किं जेष्यसि त्वं मां पूर्ववृत्तं मयोच्यते॥ यदा मद्भक्तशक्रस्य यज्ञध्वंसः कृतस्त्वया। तदाहं ते शिरश्छित्वा तत्क्रतू रक्षितो मया॥ ततो मां प्रार्थयामास मनोभीष्टाय पार्वती। तदा वै मत्प्रसादेन प्राणान् लेभे भवान् शिवे'ति उत्तरकूर्मपुराणे पार्वतीं प्रति विष्णुप्रशंसारूपेण शिववचनेन उपबृंहणात्।

अत्रेदं किलोपाख्यानम्—क्वचित्कल्पे कश्चिदिन्द्रो नारायणपरायणः सर्वदेवान् परिभूय नारायणमेवोद्दिश्य यज्ञं कर्तुमुपचक्रमे। तदनन्तरं सर्वे देवाः इन्द्रयज्ञविघ्नकरणाय रुद्रं प्रेषयामासुः। ततो रुद्रे इन्द्रयज्ञविघ्नकरणाय प्रवृत्ते इन्द्रेण स्मारितो नारायणः यज्ञविघ्नकर्तुः रुद्रस्य शिरः चक्रेण चिच्छेद। तदनन्तरं पार्वतीस्तोत्रेण शिवमुज्जीवयामासेति। इदं च मत्स्यपुराणे नारसिंहपुराणे चावलोकनीयमिति नृसिंहविजय एव प्रामाणिकः। न तु शरभविजय इति सिद्धम्॥ ८॥

रामचन्द्रेण रावणवधजनितब्रह्महत्यापनुत्तये सेतौ लिङ्गप्रतिष्ठा तत्पूजादिकं कृतमिति यदुक्तं तदपि 'न कर्मणा वर्धते नो कनीयान्। स एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः। 'न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा' इत्यादिश्रुतिस्मृतिभिर्नारायणस्य पुण्यपापरूपकर्मलेपाभावप्रतिपादनात् तद्विरुद्धम्। न च रामचन्द्रो नारायणो न भवति किन्त्वन्य एवेति वाच्यम्। रामोपनिषदि रामायणादौ च रामचन्द्रस्य नारायणावतारत्वप्रतिपादनात्। वाल्मीकिप्रोक्ते सर्ववैदिकपरिगृहीते रामायणे तादृशार्थस्य प्रतिपादनाच्च। 'अत्र पूर्वं महादेवः प्रसादमकरोन्ममे'ति वैदेहीं प्रति प्रयाणे रावणवधात्पूर्वमेव महादेवप्रसादप्रतिपादनेन रावणवधजनितब्रह्महत्यापनुत्तये सेतौ लिङ्गप्रतिष्ठा तत्पूजादिकं कृतमित्यस्यार्थस्याप्रामाणिकत्वात्। यद्यपि लिङ्गपुराणे रामायणसंक्षेपे—'स कृत्वा वानरशतै'रित्यादिना सेतौ प्रतिष्ठा तत्पूजादिकं कृतमित्यावेद्यते। तथापि तस्य तामसत्वेन अनादरणीयत्वम्। न हि परब्रह्मभूतस्य रामचन्द्रस्य लिङ्गप्रतिष्ठा तत्पूजादिना—

नानवाप्तमवाप्तव्यं किञ्चिदस्ति । पितृवाक्यपरिपालनवद्धर्मसंस्थापनार्थं तदिति चेन्न । 'यत्र रुद्रार्चनं भस्मधारणं प्रोच्यते बुधैः । तद्ब्रह्मण्यविषयं विप्राणां तु न कर्हिचित्' इति हारीतस्मृत्या शिवलिङ्गार्चनस्य ब्राह्मणान्प्रत्यधर्मत्वावेदनाच्च । 'यान्येतानि देवत्राक्षत्राणि इन्द्रो वरुणस्सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान' इत्यादिश्रुतिभिः रुद्रस्य क्षत्रियत्वावेपनात् । 'यो वै स्वां देवतामतियजेते'त्यादिना सामान्यतः स्वानुरूपदेवतोपासनाविधानाच्च ॥

शिवार्चनं शिवलिङ्गार्चनं च क्षत्रधर्म एवेति चेद्भवेदेषा कल्पना । यद्यत्र प्रमाणान्तरविरोधो न स्यात् । 'अहमप्यवतारेषु त्वां च रुद्र महाबल । तामसानां मोहनार्थं पूजयामि युगे युगे' इति पाद्मपुराणे तारकब्रह्मराजसंहितायां विष्णुना स्वावतारेषु तामसमोहनार्थं हे! शिव मयापि त्वदर्चनं क्रियते इत्युक्तत्वेन तस्य क्षत्रधर्मत्वावेदनाच्च । 'अन्यदेवं वरं देहि प्रसिद्धं सर्वजन्तुषु । मर्त्यो भूत्वा भवानेव मम साधय केशव ॥ मां भजस्व च देवेश वरं मत्तो गृहाण च । येनाहं सर्वभूतानां पूज्यात्पूज्यतरोऽभवम् ॥ देवकार्यावतारेषु मानुषत्वमुपेयिवान् । त्वामेवाराधयिष्यामि मम त्वं वरदो भव ॥' इत्यादिना वाराहे रुद्रगीतायां कूर्मपुराणे च शिवस्य विष्ण्वर्च्यनीयतया वरलब्धत्वावेदनेन तस्य च कृष्णावतारादिषु अर्जुनादेस्सारथ्यादिकरणवत् आश्रितसौलभ्यप्रदर्शनार्थत्वेन परत्वाविघातित्वाच्च । ततश्च, 'सेतुमध्ये महादेवमीशानं कृत्तिवाससम् । स्थापयामास लिङ्गं तत् पूजयामास राघवः । तस्य देवो महादेवः स्थावरान्वरमुत्तम'मित्यादि कूर्मपुराणप्रतिपन्नलिङ्गप्रतिष्ठातत्पूजादिकं शिववरप्रार्थनानिमित्तमेवेति न तावता शिवापेक्षया विष्णोरपकर्षसिद्धिः । विश्वामित्रभारद्वाजागस्त्यदीनां नमस्कारवत्तेभ्यो वरप्राप्त्यादिवच्च रामावतारे शिवलिङ्गार्चनस्यापि विष्णोः श्रुतिस्मृत्यादिसिद्धपरब्रह्मत्वपरमस्वातन्त्र्याविघातित्वादिति ॥ ९ ॥ श्रीः ॥

एवं कृष्णस्य कैलासयात्रायां शिववरप्रदानेन पुत्रप्राप्त्यादिकमपि समर्थनीयमेवेति न कश्चिद्विरोधः । तत्र हि हरिवंशे कैलासयात्रायां

पराभिमतशिववचनैः कृष्णस्य सर्वस्मात्परत्वस्य शिवस्य कृष्णोपासकत्वस्य चावेदनेन न कृष्णस्य पुत्रप्राप्त्यादिकमपि शिववरप्रसादेनेति तपश्चर्यादिकं नटनमात्रम् । तत्र हि—"ततो वृषध्वजो देवश्शूली साक्षादुमापतिः । करं करेण संस्पृश्य विष्णोश्चक्रधरस्य हि । प्रोवाच भगवान् रुद्रः केशवं गरुडध्वजम् । शृण्वतां सर्वदेवानां मुनीनां भावितात्मनाम् । किमिदं देवदेवेश चक्रपाणे जनार्दन । तपश्चर्या किमर्थं ते प्रार्थना तव का विभो । स्वयं विष्णुर्भवान्नित्यः तपसा वा त्वया हरे । त्वत्तस्समभवद्विश्वं त्वयि सर्वं प्रलीयते । मद्भक्त्वं सर्वगो देवत्वमेवाहं जनार्दन । आवयोरन्तरं नास्ति शब्दैरर्थैर्जगत्पते । नामानि तव गोविन्द यानि लोके महान्ति च । तान्येव मम नामानि नात्र कार्या विचारणा । त्वदुपासा जगन्नाथ सेवास्तु मम गोपते । यश्च त्वां द्वेष्टि देवेश स मां द्वेष्टि न संशयः । न तदस्ति विना देव यत्ते विरहितं क्वचित् । यदासीद्यच्च वर्तेत यच्च भावि जगत्पते । सर्वं त्वं देव देवेश विना किञ्चित्त्वया न हि ॥" इत्थं तानि वचनानि प्रसिद्धान्येव । यद्यपि 'आवयोरन्तरं नास्ति शब्दैरर्थैर्जगत्पते' इत्यादिना शिवकेशवयोर्भेदो नास्तीत्यावेद्यते । तथापि—'वसूनामस्मि पावकः ; रुद्राणां च भवान्' इत्यादि पूर्ववाक्यानुसारेण 'सर्वं त्वं देवदेवेशे'त्युत्तरवाक्यानुसारेण च तदभेदवर्णनमिति न कश्चिद्विरोधः । अभेदस्य परैरनभ्युपगमाच्च । 'अहं त्व'मित्यत्र अहंशब्दस्य अहङ्कारतत्वपरत्वाभ्युपगमाच्चेति ॥ १० ॥ श्रीः ॥

यत्तु मोक्षप्रदस्य काशीक्षेत्रस्य शिवक्षेत्रत्वप्रसिद्धेः शिवस्यैव मोक्षप्रदातृत्वेन मुमुक्षूपास्यत्वमिति । तन्न । तत्र हि 'जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकब्रह्ममन्त्रं व्याचष्टे । येनासावमृतीभूत्वा मोक्षी भवती'ति जाबालिश्रुतौ रामोपनिषदि च शिवस्य तारकब्रह्ममन्त्रोपदेष्टृत्वावेदनेन अविमुक्तस्य काशीक्षेत्रस्य शिवक्षेत्रत्वेऽपि मोक्षसाधनीभूतज्ञानाविषयत्वेन शिवस्य मुमुक्षूपास्यत्वायोगात् । तारकब्रह्ममन्त्रप्रतिपाद्यस्यैव मुमुक्षूपास्यत्वप्रतीतेश्च तत्र हि—'श्रीराममन्त्रं काश्यां वै जजाप वृषभध्वजः । मन्वन्तरसहस्रैस्तु जपहोमार्चनादिभिः । ततः प्रसन्नो भगवान् श्रीरामः प्राह शङ्करम् । वृणीष्व यदभीष्टं ते दास्यामि परमेश्वर ।' इति ।

अथ 'सत्यानन्दचिदात्मानं प्राह श्रीराममीश्वरः। मणिकर्णे महाक्षेत्रे गङ्गाभुवि तटे पुनः। म्रियन्ते ये प्रभो देहि मुक्तिं नातो वरान्तर'मिति। 'स होवाच श्रीरामचन्द्रः। क्षेत्रे त्वदीये देवेश यत्र कुत्रापि वा मृताः। क्रिमिकीटादयोप्याशु मुक्तास्सन्तु न चान्यथे'ति। 'अविमुक्ते तव क्षेत्रे सर्वेषां मुक्तिसिद्धये। अहं सन्निहितस्तत्र शिलादिप्रतिमादिषु। मुमुक्षोर्दक्षिणे कर्णे यस्य कस्यापि वा स्वयम्। उपदेक्ष्यसि मन्मन्त्रं स मुक्तो भविता शिवे'ति शिवस्यैव तारकब्रह्ममन्त्रोपदेष्टृत्वावेदनाच्च॥

किञ्च, 'देवतानां हितार्थाय कुरुष्व वचनं मम। तवाप्युज्जीवनोपायं कथयामि सुरोत्तम॥ नित्यजप्यमहोरात्रं मम नामसहस्रकम्। हृदये मां सदा ध्यायन् जपेन्मन्त्रं सदाव्ययम्॥ षडक्षरं महामन्त्रं रघूणां कुलवर्धनम्। जपन् सन्निहितं देवि सदानन्दसुधाप्लुतः॥ शुभमात्यन्तिकं ब्रह्मन् दास्यामि सततं शुभे। एतत्ते सर्वमाख्यातं त्वया पृष्टं शुभानने॥ किमन्यच्छ्रोतुकामासि त्वत्पतिं परिपृच्छ माम्॥" इत्याद्युमावचनोपबृंहणानुसाराच्च। 'रुद्रस्तारकब्रह्ममन्त्रं व्याचष्टे' इत्यत्र तारकब्रह्ममन्त्रश्च राममन्त्र एव। न तु प्रणवः। यद्यपि अकारः प्रथमाक्षरो भवति। उकारो द्वितीयाक्षरो भवति। मकारस्तृतीयाक्षरो भवति, मात्रा चतुर्थाक्षरो भवति, बिन्दुः पञ्चमाक्षरो भवति, नादः षष्ठाक्षरो भवति, इति प्रणवस्तारको भवति। तथापि राममन्त्रस्यैव तारकब्रह्ममन्त्रत्वं, 'तदेषा रामचन्द्रस्याप्यकाराद्यक्षरस्मृतिः। अखण्डैकरसानन्दतारकब्रह्मवाचकः॥ रामायेति स विज्ञेयः सदानन्दचिदात्मकः। नमः पदं सुविज्ञेयं पूर्णानन्दैकविग्रहम्॥' इति स्मृतिः॥

यद्यपि प्रणवस्यैव तारकब्रह्ममन्त्रत्वं श्रूयते, तथापि तारकरामब्रह्ममन्त्राद्यक्षरवत्त्वेन प्रणवस्यापि तारकत्वव्यपदेशः। 'त्वत्तो वा ब्रह्मणो वापि ये लभन्ते षडक्षरम्। जीवन्तो मन्त्रसिद्धिं च मुक्तिं च प्राप्नुवन्ति ते॥ मुमुक्षोर्दक्षिणे कर्णे यस्य कस्यापि वा स्वयम्। उपदेक्ष्यसि मन्मन्त्रं स मुक्तो भविता शिवे'ति राममन्त्रस्यैव तारकब्रह्ममन्त्रत्वेन शिवोपदेष्टृत्वावेदनाच्च। न च शिवस्य मोक्षसाधनीभूतज्ञानविषयत्वेन मुमुक्षु-

पास्यत्वाभावे तत्र काशीक्षेत्रे मृतानां शिवसारूप्यप्रतिपादनमसङ्गतं स्यादिति वाच्यम्। तत्र यद्यपि काशीक्षेत्रे मृतानां शिवसारूप्यप्रतिपादनं चतुर्मुखादिलोकप्राप्तिरिव विष्णुसायुज्यप्राप्तेरवान्तरफलत्वे (नासङ्गत्यभावात्) 'सायुज्यानां विशिष्टे द्वे मामकं वैष्णवं तथा। मां प्राप्य न निवर्तन्ते विष्णुं वा शुभलोचने'ति भारतवचनेन विष्णुसारूप्यसायुज्यादिप्राप्तेरिव शिवसारूप्यसायुज्यादिप्राप्तेरप्यपुनरागमनमावेद्यत इति। तथापि 'ब्रह्मणस्सायुज्यं सलोकतामाप्नोति। एतासामेव देवतानां सायुज्यं सार्ष्टितां समानलोकतां याति' इति श्रुतौ परब्रह्मसायुज्यप्राप्तेः पूर्वमपि देवतान्तरादिसायुज्यादिप्राप्तिप्रतिपादनदर्शनेन विष्णुसायुज्यसारूप्यप्राप्तेः पूर्वमपि शिवसारूप्यसायुज्यादिप्राप्तेरपि सम्भवात्॥

न चात्र प्रमाणाभावः। 'तत्र हि जन्तोः प्राणेषु उत्क्रममाणेषु रुद्रस्तारकब्रह्ममन्त्रं व्याचष्टे। येनासावमृतीभूत्वा मोक्षी भवति' इति जाबालिश्रुतेरेवात्र प्रमाणत्वात्। तत्रामृतीभूत्वा इत्यनेन पुनरावृत्तिशून्यं शिवसारूप्यमभिधीयते। मोक्षी भवतीत्यनेन शिवसारूप्यसायुज्यादिलक्षणो मोक्षोऽभिधीयते। अन्यथा अन्यतरवैयर्थ्यापत्तेः। न च शिवसारूप्यसायुज्यादिरूप एव मोक्षः। विष्णुसारूप्यसायुज्यादिप्राप्तिस्तु अवान्तरफलमिति वैपरीत्यं किं न स्यात्? इति वाच्यम्। "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान्पुण्यपापे विधूय निरञ्जनः पुरुषं साम्यमुपैति"। "इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः। सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च।" इत्यादिश्रुतिस्मृतिभिः विष्णुप्रसादसाध्यस्यैव परमपुरुषार्थत्वावेदनाच्च। मुण्डकादिश्रुतिगतपुरुषशब्दस्य योगरूढिभ्यां च नारायणासाधारणनामत्वाच्चेति दिक्॥ ११॥

किञ्च महाभारते—"ततस्तौ चक्रतुर्युद्धं वासुदेवमहेश्वरौ। तद्युद्धमभवद्घोरं अचिन्त्यं रोमहर्षणम्। अन्योन्यं तौ ततस्साक्षादन्योन्य जयकाङ्क्षिणौ। दिव्यान्यस्त्राणि तौ देवौ क्रुद्धौ मुमुचतुस्तदा। ततः कृष्णो रणं कृत्वा मुहूर्तं शूलपाणिना। विजित्य तं महादेवं ततो युद्धे जनार्दनः।

अन्यान् स जित्वा द्वारस्थान् प्रविवेश पुरोत्तम" मिति शिवस्यैव कृष्णपराजितत्ववर्णनेन तदपेक्षया विष्णोरेवोत्कर्षोऽभ्युगन्तव्य इति ॥ १॥

किञ्च रामायणे "जृम्भितं तद्धनुश्शैवं दृष्ट्वा विष्णुपराक्रमैः । अधिकं मेनिरे विष्णुं देवास्सर्षिगणास्तथे"ति ॥ २ ॥

श्रीमद्भागवते दशमस्कन्धे— "सरस्वत्यास्तटे राजन् ऋषयस्सत्रमासत । वितर्कस्समभूतेषां त्रिष्वधीशेषु को महान् । तस्य जिज्ञासया ते वै भृगुं ब्रह्मसुतं नृप । तज्ज्ञप्तौ प्रेषयामासुः सोऽभ्यगाद्ब्रह्मणस्सभाम्" इत्यादिना "पुनस्स सत्रमासाद्य ऋषीणां ब्रह्मवादिनाम् । स्वानुभूतमशेषेण सर्वं भृगुरवर्णयत् । तन्निशम्याथ मुनयो विस्मिता मुक्तसंशयाः । भूयांसं श्रद्दधुर्विष्णुं यतश्शान्तिर्यतोऽभयम् । धर्मस्साक्षाद्यतो ज्ञानं वैराग्यं च चतुर्विधम् । ऐश्वर्यमष्टधा यस्माद्यतश्चात्ममलापहम्" इत्यनेन च ब्रह्मवादिभिरेव ब्रह्मरुद्रापेक्षया विष्णोरेव परब्रह्मत्वावेदनेन, विष्णोरेव परब्रह्मत्वञ्चोचितम् ॥ ३ ॥

किञ्च वृकासुरादिनिमित्तकापद्भ्यः शिवस्य विष्णुना मोचितत्वावेदनेन च विष्णोरेवोत्कर्षोऽभ्युपगन्तव्यः । श्रीमद्भागवते दशमस्कन्धे— "स तद्वरपरीक्षार्थं शम्भोश्शीर्ष्णि वृकासुरः । स्वहस्तं दातुमारेभे सोऽबिभेत् स्वकृताच्छिवः । तेनोपदिष्टस्सन्त्रस्तः परिधावन् सवेपथुः । यावदन्तं दिवो भूमेः काष्ठानामधिकं दिवः । अजानानः प्रतिविधिं तूष्णीमास महेश्वरः । ततो वैकुण्ठमगमद्भास्वरं तमसः परम् । यत्र नारायणस्साक्षात् न्यासिनां परमागतिः । शान्तानां न्यस्तदण्डानां यतो नावर्तयेत्तमः । तं तथा व्यसनं दृष्ट्वा भगवान् वै जनार्दनः ।" इत्यादिना, "एवं भगवता पृष्टो वचसामृतवर्षिणा । तस्मादब्रवीत्तस्मै यथापूर्वमनुष्ठितम्" । वृकासुरं प्रति भगवान् — "एवं चोदिततद्वाक्यं न वयं श्रद्दधीमहि । यो दक्षशापात्पैशाच्यं प्राप्तः प्रेतपिशाचराट् । यदि वस्तत्र विश्रम्भो दानवेन्द्रजगद्गुरौ । तर्ह्यङ्गुलैस्स्वशिरसि हस्तन्यासः प्रदीयताम् । यद्यसत्यं वचः शम्भोः कथञ्चिद्दानवर्षभ । तदैनं जह्यसद्वाक्यं गतवाक्य ऋते पुनः । इत्थं भगवतश्चित्रैर्वचोभिश्च सुपेशलैः । तथेति निश्चितश्शीर्ष्णि स्वहस्तं कुमतिर्व्यधात् । अथापि तद्भिन्नशिराः वज्राहत इव

क्षणात्। य एनमव्याहतशक्तिरं महापरस्य पुंसः परमात्मनो हरेः। गिरीशमोक्षं कथयेच्छृणोति वा विमुच्यते संसृतिभिस्तथारिभि-रित्यन्तेन ॥ ४ ॥

किञ्च, श्रीमद्भागवते गजेन्द्रमोक्षणे, गजेन्द्रेण स्वस्य ग्राहनिमित्ताप-द्विमोचनार्थम्—'सोऽहं विश्वसृजं विश्वमविश्वं विश्वमेधसम्। विश्वा-त्मानमजं ब्रह्म प्रणतोऽस्मि परं पद'मित्यादिना गजेन्द्रेण जगत्कारण—सर्वान्तर्यामिपरब्रह्मविषयकप्रणतावनुष्ठितायां, 'एवं गजेन्द्रमुपवर्णित निर्विशेषं ब्रह्मादयो विविधलिङ्गभिदाभिमानाः। नैते यदोपससृपु-र्निखिलात्मकत्वात् तत्राखिलामरवरो हरिराविरासी'दित्यन्तेन ब्रह्मादीनां तदनागमनेन विष्णोरेव तादृशागमनप्रतिपादनेन, विष्णोरेव परब्रह्मत्वं, परमकारणत्वं चोचितम् ॥ ५ ॥

किञ्च, विष्णुपादोदकसम्बन्धेनैव शिवस्य शिवत्वावेदनेन विष्णोरेव परब्रह्मत्वं परमकारणत्वं चोचितम्। "अथ सर्वेश्वरो विष्णुर्द्वितीयं पादमुत्तमम्। दिवि प्रसारयामास ब्रह्मलोकान्तमच्युतः। धन्योऽस्मीति वदन् ब्रह्मा गृहीत्वा स्वकमण्डलुम्। भक्त्या प्रक्षालयामास तत्र संस्थित वारिणा। अक्षय्यमभवत्तोयं तस्य विष्णोः प्रसादतः। तत्तीर्थं मेरुशिखरे चतुर्दिक्षु प्रवाहितम्। आत्मनः पावनार्थाय शिरसाहमधारय" मिति पाद्मे। "यच्छौचनिस्सृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्नि विधृतेन शिवः-शिवोऽभूत् इत्यादिना च प्रतिपादनात् ॥ ६ ॥

किञ्च चतुर्मुखपञ्चमशिरोल्लवनप्रयुक्तदोषाभिभूतत्वं शिवस्य विष्णु-प्रसादात्ततो मुक्तिश्च प्रतिपाद्यते। उक्तश्चायमर्थो मत्स्यपुराणे – 'तदा क्रोधपरीतेन संरक्तनयनेन च। वामाङ्गुष्ठनखाग्रेण शिरश्छिन्नं त्वया मया। तस्माच्छापसमादिष्टः कपाली त्वं भविष्यसि। महती स्रवती धारा तस्य रक्तस्य निस्सृता। विष्णुप्रसादात् सुश्रोणि कपाली त्वं भविष्यसि। स्फुटितं बहुधायातं स्वप्नलब्धधनं यथा।' इत्यनेन। चतुर्मुखपञ्चमशिरोल्लवनं शिवप्रेरितेन भैरवेण कृतम्, न तु शिवेनेति चेन्न। प्रमाणाभावात्। तादृशप्रमाणसत्त्वेऽपि तस्य, 'यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्। अहं रुद्राय धनुरातनोमि

ब्रह्मद्विषे शरवे हन्त वा उ । ' इत्यादि श्रुतिविरुद्धत्वाच्च । यत्तु चतुर्मुख-पञ्चशिरः खिलनेन चतुर्मुखस्य श्रुतिषु प्रतिपादनादिति । 'यो ब्राह्मणायापगुरेत्तं शतेन यातयेद्यो निहन्यात् सहस्रेण यातयेद्यो लोहितं कुर्यात् यावतः तत्प्रस्कन्द्य पांसून्संगृह्णात्तावतस्संवत्सरान् पितृलोकं न प्रजानादिति । तस्माद्ब्राह्मणाय नापगुरेन्न निहन्याल्लोहितं कुर्यात्ताव-ताहैनसा भवतीति ॥ ७ ॥

उदाहृतानि धर्मशास्त्राणि पुराणानि च त्रिविधानि । सात्विकानि राजसानि तामसानि चेति । 'वासिष्ठं चैव हारीतं व्यासं पाराशरं तथा । भारद्वाजं काश्यपं च सात्विका मुक्तिदायिनः ॥ मानवं याज्ञवल्क्यं च आत्रेयं दाक्षमेव च । कात्यायनं वैष्णवं च राजसास्स्वर्गदायिनः ॥ कार्दमं वार्हस्पत्यं च सावृत्तं च यमस्मृतिः । शाङ्खमौशीनसं चेति तामसा निरयप्रदाः ' इत्यादिवचनानुसारात् । 'वैष्णवं नारदीयं च तथा भागवतं शुभम् । गारुडं च तथा पाद्मं वाराहं शुभदर्शने । षडेतानि पुराणानि सात्विकानि मतानि वै । ब्रह्माण्डं ब्रह्मवैवर्तं मार्कण्डेयं तथैव च । भविष्यद्वामनं ब्राह्मं राजसानि निबोध मे । मात्स्यं कौर्मं तथा लैङ्गं शैवं स्कान्दं तथैव च । आग्नेयं च षडेतानि तामसा निरयप्रदाः । ' इत्यादिवचनानुसारात्तेषां परस्परविरोधे सात्विकोक्तमेव ग्राह्यम् । अन्यत् बाध्यमर्थान्तरपरं वा । 'शास्त्राण्यपि च सर्वाणि सात्विकानि मतानि वै ॥ यानि सत्यवरं विष्णुं वदन्ति परमेश्वरम् । तानि शास्त्राणि सर्वाणि सात्विकानि मतानि वै ॥ प्रजापतिं कृशानुं च तथा देवीं सरस्वतीम् । परत्वेन वदच्छास्त्रं राजसं परिचक्षते ॥ यच्छास्त्रं लिङ्ग-पारम्यं वामदेवमुमापतिम् । तमःप्रवर्तकं वक्ति तत्तामसमुदाहृत'मिति पाद्मपुराणवचनानुसारेण वैपरीत्यशङ्कानवकाशात् विष्णोरेव परब्रह्मत्वं परमकारणत्वं चोचितमिति सिद्धम् ॥

न्यायमौक्तिकमालायां शैवसर्वस्वखण्डनम् ।
विजयीन्द्रयतीन्द्रेण रचितं श्रीशतुष्टये ॥

जगद्गुरुसर्वतन्त्रस्वतन्त्रश्रीमद्विजयीन्द्रभिक्षुविरचितं
शैवसर्वस्वखण्डनं सम्पूर्णम् ॥

**॥ श्रीकृष्णार्पणमस्तु ॥**

# ॥ अथ साङ्ख्ययोगमतभङ्गः ॥

साङ्ख्ययोगमतस्वरूपनिरूपणभागो मूलकोशेषु नोपलभ्यते अतस्तन्मतस्वरूपं संगृह्यात्र प्रादर्शि ।

प्रथमं साङ्ख्यमतं संगृह्य निरूप्यते।

तत्र तावत् दार्शनिकेषु स्वतन्त्रप्रकृतिपरिणामवादिनः साङ्ख्यास्त्वतीव विख्याता वर्तन्ते। तेतु द्विविधाः निरीश्वराः सेश्वराश्चेति । तयोर्निरीश्वराश्चेश्वरमनभ्युपगम्य जीवजडात्मकं तत्त्वद्वयमेवाहुः। तन्मते संक्षेपतस्तत्त्वस्य चतस्रो विधाः परिदृश्यन्ते। कश्चिदर्थः प्रकृतिरेव। कश्चिदर्थः विकृतिरेव। कश्चिच्च प्रकृतिर्विकृतिश्च । कश्चिदनुभयरूपः । तत्र सत्त्वरजस्तमसां साम्यावस्था प्रधानं प्रकृतिरेव। प्रकर्षेण करोति कार्यमुत्पादयतीति प्रकृतिः। प्रकृष्टा कृतिरस्या इति वा प्रकृतिः। प्रकर्षश्च तत्त्वान्तरारंभकत्वम्। सा हि सर्वस्य विश्वस्य कार्यस्य मूलम्। न त्वस्या मूलान्तरमस्ति। सत्त्वरजस्तमसां साम्यादेवेदं सत्त्वं इदं रजः इदं तम इति विशिष्य व्यवहारयोग्यतापि न शक्यते तत्र वक्तुम्। अत एव तदेकमेवेति व्यपदिश्यते। महदाद्युपादानकारणत्वात् संयोगविभागाश्रयत्वाच्च सत्त्वरजस्तमांसि द्रव्यरूपाण्येव। पुरुषशब्दितजीवभोगसाधनत्वेन गुणभूतत्वादेव तेषां गुणत्वेन व्यवहारो वरीवर्ति। सत्वादीनां प्रकृतिरूपत्वेन प्रकृतिधर्मत्वाभावात् प्रकृतेर्गुणा इति व्यवहारस्तु वनस्य वृक्षा इतिवद्बोध्यम् । "सत्त्वंरजस्तम इति गुणाः प्रकृतिसंभवाः" इति गीतावाक्यश्रुतगुणपदेन साम्यावस्थापन्नानां प्रकृतिस्वरूपभूतानां गुणानां न ग्रहणम्। परन्तु मूलप्रकृतिकार्यभूताः वैषम्यावस्थाः महत्तत्त्वादिकारणीभूताश्च ये सत्त्वादयो वर्तन्ते त एव परीकीर्त्यन्ते। वैषम्यं च सत्त्वरजस्तमसां प्रत्येकमनेकव्यक्तीनां मिथः सजातीयसंवलनेन लघुत्वप्रकाशावरणफलोपहितः इदं सत्त्वं इदं रजः इदं तम इति प्रत्येकं विशिष्य व्यवहारयोग्यः परिणामविशेषः। तदिदं वैषम्यावस्थं गुणत्रयत्वेन व्यवह्रियमाण मूलप्रकृत्यपेक्षया

पृथक् तत्त्वत्रयमिति कैश्चित् साङ्ख्यशास्त्राभिज्ञैरष्टाविंशतितत्त्वपक्षः समादृतः संदृश्यते। सत्त्वादीनां त्रयाणां गुणानां लघुत्वादयः स्वभावविशेषाः साङ्ख्यैः परिकीर्तिताः। तदुक्तम्—

"सत्त्वं लघु प्रकाशकमिष्टमुपष्टंभकं चलं च रजः। गुरु वरणकमेव तमः।" इति (सां. का. १३)

तत्र सत्त्वमेव लघु प्रकाश चेष्टम्। तस्य सत्त्वस्य लघुत्वादेव तत्कार्यभूतेष्विन्द्रियेषु विषयग्रहणाभिमुख्यरूपं पाटवं परिदृश्यते। सत्त्वस्य प्रकाशकत्वादेव तत्कार्यभूतानामिन्द्रियाणामपि विषयप्रकाशकत्वमुपपद्यते। रज एवोपष्टम्भकं चलं चेष्टम्। रजश्च यतश्चलं स्वभावतोऽतः सक्रियम्। अत एव रजः सत्त्वस्य तमसश्चोपष्टम्भकं तत्तत्कार्योत्पादे प्रवर्तकमभिमतम्। सत्त्वगुणतमोगुणयोरक्रियत्वेन तयोः स्वाभाविकप्रवृत्त्यभावः प्रसिद्धः। तम एव गुरु आवरक चेष्टम्। लघुत्वविरोधी स्थितिहेतुभूतो धर्मविशेषः गुरुरिति निगद्यते। तमोगुणप्रकर्षेण सत्त्वस्वभावाः रजस्स्वभावाश्च प्रतिबध्यन्ते। एतदेवास्यावरकत्वमभिप्रेतम्। एवं सत्त्वस्य सुखप्रसादप्रकाशादयो धर्माः। रजसो दुःखकालुष्यप्रवृत्त्यादयो धर्माः। तमसो मोहावरणस्तम्भनादयो धर्माः। अत एव लोके रजो दुःखात्मकमिति, तमो मोहात्मकमित्यपि प्रसिद्धिर्वर्तते। मूलप्रकृतिरूपं तत्त्वं विभुपरिमाणमिति साङ्ख्या मन्यन्ते। तदेतन्मूलप्रकृतिरूप तत्त्वमनुमानेन ते साधयन्ति। तथा च प्रयोगः - महदादिकार्यं सुखदुःखमोहात्मकद्रव्यकार्यं—कार्यत्वे सति सुखदुःखमोहात्मकत्वात्। वस्त्रादिकार्यभूतशय्यासनादिवत्। इति। अथवा महदादिकं- सकारणकं सजातीयकारणजन्यं वा, सजातीयोपादानकं वा, स्वतन्त्रकारणजन्यं वा कार्यत्वात्॥ इति॥

अथवा —विमतं भावजातं —सुखदुःखमोहात्मककारणकं——तदन्वितत्वात्। यद्येनान्वीयते तत्तत्कारणकम्—यथा रुचकादिकं सुवर्णान्वितं सुवर्णकारणकं, तथाचेदम् तस्मात्तथेति। एवं सर्वं भावजातं—सुखदुःख-

मोहात्मकं त्रिगुणप्रधानकारणकमित्येतद्वेदेऽप्युपगीयते। तथाहि श्वेताश्वतरोपनिषदि श्रूयते। "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः। अजोह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" ॥ इति (श्वेतश्व. अ. ४ मं. ५) अत्र लोहितशुक्लकृष्णशब्दाः रंजकत्वप्रकाशकत्वावरकत्वसाधर्म्यात् रजःसत्त्वतमोगुणत्रयप्रतिपादनपरा बोद्धव्याः। अचेतनस्यैव प्रधानस्य स्वतन्त्रस्य कर्तृत्वेन सर्गाद्युपपत्तेरदृष्टेश्वरकल्पनानुपपत्तेः स्वतन्त्रेश्वरवादोऽनुपपन्न इति सांख्याचार्याः समाचक्षते। लोके तावत् चेतनानधिष्ठमचेतनमपि पुरुषार्थाय प्रवर्तमानं दृष्टम्। यथा जलमचेतनं लोकोपकाराय प्रवर्तते। यथावाज्ञस्य क्षीरस्य वत्सविवृद्ध्यर्थं प्रवृत्तिस्तथा प्रकृतिरचेतनापि पुरुषविमोक्षाय प्रवर्त्स्यति।

तदुक्तम्----वत्सविवृद्धिनिमित क्षीरस्य यथा प्रवृत्तिरज्ञस्य।
पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥

इति (सां. का. ५७) ॥

इह च कर्तृत्व नाम स्वत एव प्रवृत्तिमत्वं विवक्षितम्। विकृतयश्च प्रकृतयश्च महदहङ्कारतन्मात्राणि सप्ततत्त्वानि। तदप्युक्तम्।

"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त" इति ॥

तत्रान्तःकरणादिपदवेदनीयं द्वितीयं तत्त्वं बुद्धिः। अस्या एव बुद्धेः महानिति संज्ञा। तच्च महत्तत्वमहङ्कारस्य प्रकृतिः। मूलप्रकृतेस्तु विकृतिः। तदेवाहङ्कारतत्त्वं तामसं सत् पञ्चतन्मात्राणां सूक्ष्माभिधानानां प्रकृतिः। तदेव सात्विकं सदेकादशेन्द्रियाणां बुद्धीन्द्रियाणां चक्षुःश्रोत्रघ्राणरसनात्वगाख्यानां तथा कर्मेन्द्रियाणां वाक्पाणिपादपायूपस्थाख्यानामुभयात्मकस्य मनसश्च प्रकृतिः। रजसस्तूभयत्र क्रियोत्पादनद्वारेण कारणत्वमस्तीति तस्य सार्थक्यमवगन्तव्यम्। पञ्चतन्मात्राणि तत्त्वानि पञ्चमहाभूतानामाकाशादीनां प्रकृतयो विकृतयश्चाहङ्कारस्य। तथाच पञ्चभूतान्येकादशेन्द्रियाणींति षोडशको गणो विकृतिरेव।

पुरुषस्त्वनुभयरूपो न प्रकृतिर्नापि विकृतिः । जन्ममरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च पुरुषबहुत्वमङ्गीकृतम् । तदेवं विस्तरतः पञ्चविंशतितत्त्वानि । सर्वमेतत् सङ्गृह्योक्तं यथा—

"मूलप्रकृतिरविकृतिः महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥"

इति (सां. का. ३) ॥

प्रकृतेर्महान् ततोऽहङ्कारस्तस्माद्गणश्च षोडशकः ।
तस्मादपि षोडशकात्पञ्चभ्यः पञ्चभूतानि ॥ सां. का. २२ इति च ॥

प्रकृत्यादिपञ्चविंशतित्त्वसङ्ख्यायाः प्रतिपादनात्तेषां साङ्ख्यशब्दवाच्यत्वं भारतभागवतमात्स्यपुराणेष्वधिगम्यते । साङ्ख्यशास्त्रप्रशंसा च क्वचिदुपलभ्यते ।

तद्यथा—"सङ्ख्यां प्रकुर्वते यस्मात्प्रकृतिं च प्रचक्षते ।
तत्त्वानि च चतुर्विंशत्तेन साङ्ख्यं प्रकीर्तितम ॥" इति ॥

"सङ्ख्यां प्रकुर्वते चैव प्रकृतिं च प्रचक्षते ।
चतुर्विंशतितत्त्वानि तेन साङ्ख्याः प्रकीर्तिताः ॥" इति ॥

"साङ्ख्यं सङ्ख्यात्मकत्वाच्च कपिलादिभिरुच्यते" इति च ।

नास्ति साङ्ख्यसमं ज्ञानं नास्ति योगसमं बलम् ।
अत्र वः संशयो माभूत् ज्ञानं साङ्ख्यं परं मतम् ॥ इति च ॥

आप्रलयं कार्याणां परस्परविभेदश्च भवेदिति साङ्ख्यैः कथ्यते । साङ्ख्यमते प्रत्यक्षानुमानागमाश्चेति त्रीणि प्रमाणानि । सत्कार्यवादिनस्तु साङ्ख्याः । कार्यं तावत् कारकव्यापारात्प्रागपि सदेवेति ते प्रतिपादयन्ति । नैयायिकाभिमतमसत्कार्यवादं सयुक्तिकं निराकुर्वन्ति । तदुक्तम् —

"असत्त्वान्नास्ति सम्बन्धः कारणैः सत्त्वसङ्गिभिः ।
असम्बद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः ॥" इति ॥

एवं— "असदकरणादुपादानग्रहणात्सर्वसम्भवाभावात् ।
शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्यम् ॥" इति ॥
(सां. का. ९)

पञ्चविंशतितत्वान्यभ्युपगच्छन्तः साङ्ख्याः पुनः प्रथमस्य प्रधानरूपतत्त्वस्य प्रसाधनायानुमानं केवलं प्रमाणतया यदुदाहरन्ति तच्चानुमानं सतः सज्जायत इत्येवं कार्यकारणभावमुपजीव्य प्रवर्तते । कार्यकारणभावे च मतभेदेन चत्वारः कल्पाः संलक्ष्यन्ते । तत्रासतः कारणादसदेव कार्यं जायत इत्येकः पक्षः । असतः सकाशात् सदित्यपरः पक्षः सतः कारणात्सकाशादसदिति तृतीयः कल्पः । सतः सकाशात्सदिति चतुर्थः पक्षः । तेषु प्रथमः पक्षः सुतरामेवासमीचीनः । असतस्तुच्छस्य कार्यस्य शशविषाणस्येवोत्पत्त्यसम्भवात् । असतः कारणात् सतः कार्यस्योत्पत्तिरिति बौद्धानां राद्धान्तः । कार्यस्य सत्वनाम बौद्धसिद्धान्ते क्षणकालमवस्थितिरूपमेव । न तु कालत्रयाबाध्यत्वाधिकम् । सतः सकाशादसतः कार्यस्योत्पत्तिरिति तृतीयः पक्षो मायावादिनां वेदान्तिनामभिमतः । द्रव्यस्य सतोऽवस्थान्तरापत्तिः खलु परिणामः । यथा मृत्पिण्डस्य घटात्मना परिणामः । अपरित्यक्तमूलरूपस्य (प्राक्तनरूपस्य वा) वस्तुनो असता रूपान्तरेण प्रतीतिर्हि विवर्तः । यथा शुक्तिकायाः रजतरूपेण प्रतीतिः । नित्यशुद्धबुद्धमुक्तस्वभावाद्वितीयचैतन्यैकरसब्रह्मस्वरूपवादिनो ह्यैक्यवादिनस्त्वधिष्ठानभूते ब्रह्मणि सर्वं जगत् भ्रान्त्या प्रतिभासत इति सञ्चक्षते । विवर्तत्वात्तस्याभासमात्रत्वमिति न ब्रह्मवत् पारमार्थिकत्वम् । व्यावहारिकरूपेण सत्त्वं तु कार्यस्य जगतस्तैरङ्गीकृतत्वात्तदभिप्रायेणैव सतः सकाशात्सत्कार्यमुत्पद्यत इति तुरीयः पक्षोऽपि तन्मते वक्तुं शक्यते । साङ्ख्यास्तु कार्यस्य पारमार्थिकसत्त्वमूरीकुर्वन्ति । उत्पत्तेः पूर्वमसदेव कार्यं सतो मृदादिकारककलापात्सकाशाज्जायत इति नैयायिका वैशेषिकाश्च सङ्गिरन्ते । साङ्ख्यमते तु कारकव्यापारात्प्रागपि कार्यं सदेव । सत एव घटादिकार्यस्य कारकव्यापारात्प्रागनभिव्यक्तस्वरूपस्य कारकव्यापारेण केवलमभिव्यक्ति

तैलदृष्टान्तप्रदर्शनपुरस्सरमुपपादयन्ति । यथा तिलेषु विद्यमानस्यैव तैलस्य तैलयन्त्रसम्पीडनादभिव्यक्तिः तथा सतः कारणात् कार्यस्य पूर्वमनभिव्यक्तस्याभिव्यक्तिरिति निरूपणात्ते सत्कार्यवादित्वेन दार्शनिकैः परिगण्यन्ते । तेष्वपि मतभेदः संलक्ष्यते । सर्वेऽपि साङ्ख्याः पुरुषस्य कर्तृत्वं नानुमन्यन्ते । तदुक्तम्—

"तस्माच्च विपर्यासात्सिद्धं साक्षित्वमस्य पुरुषस्य ।
कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च ॥" इति ॥ (सां.का. १९)

तत्रापि केचिच्चेतनस्य भोक्तृतामाहुः । अपरे तामपि नाङ्गीकुर्वते । तद्यथा—

तस्मान्न बध्यतेऽसौ न मुच्यते नापि संसरति कश्चित् ।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥ इति ।
(सां. का. ६२)

सुखदुःखाद्यनुभवितृत्वं हि भोक्तृत्वम् । तच्चात्मनः क्रियावेशमन्तरेण स्वरूपचैतन्येनैवोपपद्यत इति तेऽभिमन्यन्ते । भोक्तृत्वं न पुरुषस्वभावः । अपवर्गाभावप्रसङ्गात् । आत्मनश्चापरिणामित्वादागन्तुकमपि भोक्तृत्वं तस्य वक्तुमशक्यम् । अतः कर्तृत्वमिव भोक्तृत्वमप्यात्मनो न शक्यमङ्गीकर्तुम् । प्रकृतिसंयोगनिमित्तो हि पुरुषस्य भोगः । प्रकृतिसंयोगोऽपि पुरुषस्य न केवलं भोगार्थः । किन्त्वपवर्गार्थश्च । तत्र विवेकाग्रहसचिवो भोगाय भवति । प्रकृतिपुरुषविवेकग्रहे चापवर्गाय । करोतु नाम पौनःपुन्येन शब्दाद्युपभोगं प्रकृतिः । अनया विवेकख्यातिरकृतेति । कृतविवेकख्यातिस्तु न शब्दाद्युपभोजयति । अविवेकख्यातिनिबन्धनो हि उपभोगः निबन्धनाभावे न भवितुमर्हति । तस्मादचेतनस्यापि चेतनविशेषानधिष्ठितस्य प्रधानस्य महदादिरूपेण परिणामः पुरुषार्थप्रयुक्तः प्रधानपुरुषसंयोगनिमित्तश्च । यथा व्यापाररहितस्याप्ययस्कान्तस्य सन्निधानेन लोहे व्यापारः संदृश्यते तथा निर्व्यापारस्य पुरुषस्य सन्निधानेन प्रधानव्यापारो युज्यत इति तेऽभिप्रयन्ति । एवं प्रकृतिपुरुषसंयोगविषयेऽपि साङ्ख्यास्त्वेवमाहुः । यथा प्रकृतिपुरुषसम्बन्धोऽपि

पंग्वन्धवदन्योन्यापेक्षा निबन्धनः । प्रकृतिर्हि भोग्यतया भोक्तारं पुरुषमपेक्षते । पुरुषोऽपि प्रकृतिपरिणामभूताया बुद्धेः सकाशात् भेदस्याग्रहात् स्वात्मानं बुद्धिस्वरूपं मन्यमानो बुद्धिगतं सुखदुःखादिकं सर्वं स्वस्यैवेति जानन् तत्प्रहाणाय कैवल्यमपेक्षते । तच्च कैवल्यं प्रकृतिपुरुषविवेकनिबन्धनं न तदन्तरेण युक्तमिति कैवल्यार्थं पुरुषः प्रधानमपेक्षते । यथा खलु गतिशक्तिविहीनस्य पङ्गोरभीप्सितदेशप्राप्त्यर्थं गतिशक्तिमतोऽपेक्षायामन्धस्य च दृक्शक्तिविहीनस्य दृक्शक्तिमतोऽपेक्षायाञ्च संयोगो भवति । ततश्चान्धेन पङ्गुः स्वस्कन्धमारोपितः । ततः परमन्धः स्वस्कन्धारूढपङ्गुनिर्दिष्टमार्गेण गच्छन्नभीष्टस्थानमाप्नोति । तथा परस्परापेक्षप्रधानपुरुषनिबन्धनः सर्ग इति तद्विषये साङ्ख्याश्चान्धपङ्गुन्यायं निर्दिशन्ति । तदुक्तम् —

"पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य ।
पंग्वन्धवदुभयोरपि सम्बन्धस्तत्कृतः सर्गः ॥ इति ॥

(सां. का. २१)

अत्र पुरुषः क्रियारहितत्वात्--पङ्गुसदृशः । प्रधानन्त्वचेतनत्वादन्ध-तुल्यम् । एवञ्च पूर्वोक्तरीत्या पङ्गुसम्बन्धादन्धो मार्गे यथा प्रवर्तते तथैव पुरुषसम्बन्धात्प्रधानमचेतनमपि प्रवर्तते । यथा चान्धसम्बन्धात्पङ्गुः स्वयं गमनशक्तिहीनोप्यन्धसाहाय्येनाभीष्टदेशमुपगच्छति तथा प्रधानसम्बन्धात्पुरुषो विवेकज्ञानद्वारा कैवल्यमाप्नोतीति तेषां परमाशयः ।

एवमेव यथा खलु स्वैरिणी भर्त्रा दृष्टदोषा भर्तारं पुनर्नापैति यथा वा नर्तकी शृङ्गारादिरसैस्तदनुगुणानुभावैश्च निबद्धगीतवादित्रनृत्यानि प्रेक्षकसहृदयवृन्दस्य प्रदर्श्य कृतकार्या नृत्यान्निवर्तते तथा प्रकृतिरप्यात्मानं बुद्ध्यहङ्कारतन्मात्रेन्द्रियमहाभूतभेदेन प्रकाश्य ततो निवर्तते । न च निवृत्तापि पुनः प्रवर्त्स्यतीति शङ्कनीयम् । प्रयोजनाभावात् । तदेतत्सर्वं साङ्ख्याचार्यैः कारिकायां प्रत्यपादि ।

तच्चोक्तम्—

“ दृष्टा मयेत्युपेक्षक एको दृष्टाहमित्युपरमत्यन्या ।
सति संयोगेऽपि तयोः प्रयोजनं नास्ति सर्गस्य ॥ (सां.का. ६६)

इति । तथा

“ रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात् ।
पुरुषस्य तथात्मानं प्रकाश्य विनिवर्तते प्रकृतिः ॥ (सां.का. ५९)

इति ॥ एवं—

“ प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति ।
या दृष्टास्मीति पुनर्न दर्शनमुपैति पुरुषस्य ॥ ” (सां.का. ६१)

इति ॥

तदेतत्साङ्ख्यमतं केवलाचेतनकर्तृत्वचेतनसहिताचेतनकर्तृत्वाभ्यां द्वेधा परिदृश्यते । तत्रापि द्वितीयं साङ्ख्यमतमपि गुणभूतेश्वरानुगृहीतप्रधान-कर्तृत्वेन जीवसहितप्रधानकर्तृत्वेन चेति द्विविधम् । अनयोर्मध्ये द्वितीयं निरीश्वरमाद्यन्तु सेश्वरम् । सेश्वरमपि साङ्ख्यमतमीश्वरस्य स्वातन्त्र्याद्यस्वीकारेण फलतो निरीश्वरवाद एवान्तर्भवति । जीवसहितप्रधानस्य कर्तृत्वमपि जीव-स्योपसर्जनत्वप्राधानाभ्यां द्वेधा वर्तते । एवं निरीश्वरसाङ्ख्यमतं केनचित् वैलक्षण्येन चतुर्विधमुपावर्णि प्राक्तनैराचार्यैरिति साङ्ख्यमतसङ्ग्रहः ॥

तदेतत्स्वतन्त्रापरिच्छिन्नप्रकृतिकर्तृत्ववादो नितरामप्रामाणिकः । तथाहि ॥

अरा इव रथनाभौ कला यस्मिन् प्रतिष्ठिताः तं वेद्यं पुरुषं वेद यथा मा वो मृत्युः परिव्यथा इति तान्होवाचैतावदेवाहमेतत्परं ब्रह्म वेद नातः परमस्तीति (षट् प्रश्न ६ मं. ६, ७) ते तमर्चयंतस्त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसीति ॥ (षट् प्रश्न ६ मं. ८) तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारः क्षयंतमस्य रजसः पराके इत्यादि श्रुतिभिः तस्याः परिच्छिन्नत्वेनैव सिद्धेः।

न च मूलप्रकृतिसिद्धिर्नागमात् किंत्वनुमानत इति युक्तम्। केवलानुमानेन तदसिद्धेः। अन्यथा धर्मादीनामप्यनुमानेन सिद्धयाऽऽगमप्रामाण्यांगीकारवैयर्थ्यात्। न हि धर्मादीनामेवागमेन सिद्धिः प्रकृत्यादीनांत्वनुमानत इत्यर्धजरत्याश्रयणं युक्तम्। अलौकिकत्वस्योभयत्र तुल्यत्वात्। न चागमः प्रमाणमेव नेति युक्तम्। अपसिद्धान्तात्।

"दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्धत्वात्। त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धि ॥ (सां. कारिका श्लो. ४) प्रतिविषयाध्यवसायो दृष्टं त्रिविधमनुमानमाख्यातम्। तल्लिंगलिंगिपूर्वकमाप्तश्रुतिराप्तवचनं तु ॥ (सां. कारिका श्लो. ५) इति सप्तत्यां प्रत्यक्षादितुल्यतया शब्दप्रमाणस्याभ्युपगमात्। न च तल्लौकिकवाक्याभिप्रायं तद्विशेषनियामकाभावात्। तच्च स्वतः प्रमाणमपौरुषेयवेदोपजीवित्वेन सकलदोषाशंकाविनिर्मुक्तं भवतीति सप्ततिव्याख्यानविरोधापत्तेश्च।

अस्तु वा प्रकृतेरनुमानतः सिद्धिः। तथाऽपि विभुत्वं न सिध्यति। तत्र तस्यासामर्थ्यात्। न चानुमानांतरतस्तत्सिद्धिः। त्वन्मते प्रकृतिव्यतिरिक्तविभ्वंतरस्यानभ्युपगमेन व्याप्तेरेवासिद्धेः। न च व्यतिरेकव्याप्तिः। त्वदनभिमतस्यापि तया सिद्धिप्रसंगात्। उदाहृतश्रुतिविरोधेन तथाविधानुमानप्रवृत्त्ययोगाच्च। नचोदाहृतश्रुतीनां प्रकृतेः परिच्छिन्नत्वप्रतिपादने तात्पर्यं नेति युक्तम्। मानान्तरविरोधाभावेऽपूर्वत्वेच सति तात्पर्यस्य दुर्वारत्वात्। न च तत्र प्रकृत्यात्मनोर्भेदमात्रं प्रतीयत इति वाच्यम्। बाधकं विना स्वरससिद्धार्थत्यागायोगात्। तस्मान्मूलप्रकृतेर्न विभुत्वमङ्गीकरणीयम्।

अस्तु वा मूलप्रकृतेर्ब्रह्मवद्व्यापकत्वम्। तथापि तस्या अनाश्रितत्वं स्वातंत्र्यं च नांगीकरणीयम्। "संयुक्तमेतत्क्षरमक्षरं[1] च व्यक्ताव्यक्तं भरते विश्वमीशः॥ (श्वेताश्व प्र. अ. मं. ८) क्षरं प्रधानममृताक्षरं हरः। क्षरात्मानावीशते देव एकः[2]" (श्वेताश्वतर प्र. अ. मं. १०) सूयते पुरुषार्थं च तेनैवाधिष्ठितं जगत्। 'गौरनाद्यंतवती[3] (मंत्रिकोपनिषत् मंत्रः ५) 'मयाऽध्यक्षेण[4] प्रकृतिः सूयते सचराचरं' (भगवद्गीता अ. ९, श्लो. १०) इत्यादिश्रुतिस्मृतिभिस्तस्या अन्याश्रितत्वान्याधीनत्वयोः प्रतिपन्नत्वात्। न चेश्वरस्य मयाऽनभ्युपगमात्प्रकृतेरनाश्रितत्वं स्वातंत्र्यं च सिध्यतीति वाच्यम्। अनंगीकारे हेत्वभावात्। प्रमाणसिद्धार्थस्य दुरपह्नवत्वात्। अन्यथाऽतिप्रसंगात्। त्वन्मते महदादिकार्यानुरूपप्रकृतिरूपोपादानसिद्धेरिव तथाविधकार्यकर्तृभूतेश्वरसिद्धेरपि दुरपह्नवत्वात्। न च कार्यस्योपादानापेक्षैव न तु कर्त्रपेक्षेति संकोचे कारणमस्ति। व्याप्तेरुभयत्र तुल्यत्वात्। अचेतनभूतायाः प्रकृतेः स्वतः प्रवृत्त्ययोगाच्च। न च वत्सविवृध्यर्थं कर्तारं विनैव क्षीरादिकार्यं दृष्टमिति वाच्यम्। तत्रापि गवाद्यात्मनामेव कर्तृत्वात्। अन्यथा मृतशरीरादपि क्षीराद्युत्पत्तिः स्यात्। न चायस्कान्तसन्निधिमात्रेण लोहप्रवृत्तिवत् पुरुषसन्निधानमात्रेण प्रकृतेः प्रवृत्तिरिति युक्तम्। "को ह्येवान्यात्कः प्राण्यात्" (तै. २-७) इत्यादिश्रुतिभिः सर्वप्रवृत्तेरीश्वराधीनत्वं वदन्तं प्रति तादृशोदाहरणस्यासंप्रतिपन्नत्वात्। किंच निरवय

---

1. अनीशश्चात्मा बध्यते भोक्तृभावात् ज्ञात्वादेवं मुच्यते सर्वपाशैः इत्युत्तरार्धम्।

2. तस्याभिध्यानात् योजनात् तत्त्वभावात् भूयश्चान्ते विश्वमाया निवृत्तिः ॥ इत्युत्तरमंत्रभागः।

3. गौरनाद्यन्तवती सा जनित्री भूतभाविनी।
सितासिता च रक्ताच सर्वकामदुघा विभोः ॥ ५ ॥

4. हेतुनानेन कौन्तेय जगद्विपरिवर्तते ॥ इत्युत्तरार्धम्।

वत्वमपि तस्या न युक्तम्। तस्या अनेकावयवसंघातरूपत्वात्। तथा च विष्णुपुराणम्—

महान्तं च समावृत्य प्रधानं समवस्थितम्।
अनंतस्य न तस्यांतः संख्यानं वापि विद्यते॥
तदनंतमसंख्यातं संख्यातं सप्रमाणकम्—इति॥

"अजामेका"मित्यादिश्रुतिस्तु (श्वे. अ. ४, मं. ७) समष्ट्यभिप्रायेति न विरोधः। एतच्च "रचनानुपपत्तेश्च नानुमानमित्यादिना" (ब्र.सू. अ २, पा. २, सू. १) समयपादे विस्तरेणोपपादितम्। तत्रैवानुसन्धेयम्॥

तस्मादुपक्रमोपसंहारादिषड्विधतात्पर्यलिंगोपेतैः वेदान्तवाक्यैः सर्वज्ञस्य सर्वशक्तेः सर्वजगत्कारणस्य प्रकृतिपुरुषविलक्षणस्येश्वरस्य नापह्नवः कर्तुं शक्य इति स्थितम्॥

यत्तु यद्यपि पुरुषश्चिन्मात्ररूपः उदासीनस्वभावश्च तथाऽपि बुद्धितत्वे प्रतिबिंबितस्तच्छायापत्त्या बुद्धितत्ववर्तिना ज्ञानसुखकृत्यादिना ज्ञानसुखादिमानिव कर्तेव च भवति। अचेतना बुद्धिरपि चिच्छायापत्त्या चेतनेव भवतीति तन्न। जीवे ज्ञातृत्वकर्तृत्वभोक्तृत्वादेः स्वाभाविकत्वात्। "एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानाऽऽत्मा पुरुषः" (षट्प्रश्न ४, मं. ९) इति श्रुत्या निकृष्टजीवस्यैव ज्ञातृत्वादीनां प्रतिपादनात्। नचेयं श्रुतिः परविषयेति शंक्यम्। 'स यो ह वै तदच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते। यस्तु सोम्य स सर्वज्ञ (षट्प्रश्न ४, मं. १०) इति वेद्यस्य परस्वरूपस्याव्यवधानेन प्रतिपादनेन पूर्ववाक्येनोपासकजीवस्वरूपस्यैव प्रतिपादनीयत्वात्। "गुणान्वयो यः फलकर्मकर्ता कृतस्य तस्यैव स चोपभोक्ते"ति (श्वे. उ. अ. ५, मं. ७) जीवविषयश्रुत्यन्तरसत्वाच्च। न च 'ध्यायतीव लेलायतीव' 'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः' अहंकारविमूढात्मा कर्ताऽहमिति मन्यते" (भगवद्गीता अ. ३, श्लो. २७) इत्यादिश्रुतिस्मृतिभिः कर्तृत्वभोक्तृत्वादेः अध्यासरूपत्वसिद्ध्या पूर्वोदाहृतश्रुत्योरपि तथाविधकर्तृत्वादिपरत्वमेव युक्तमिति वाच्यम्। स्वल्पभोजने भुक्तमिवेतिवदस्वतंत्रकर्तरि जीवे ध्यायतीव लेलायतीवेति

निर्देशोपपत्तेः। स्मृत्यापि स्वतन्त्रकर्तृत्वस्यैवाध्यासरूपत्वप्रतिपादनेन कर्तृत्वमात्रस्य तथात्वाप्रतिपादनाच्च 'सर्वं ह पश्यः पश्यति' 'जक्षन् क्रीडन् रममाणः' एतत्सामगायन्नास्ते (तै. उ. भृगुवल्लीदशमाऽनुवाकः) सर्वान् कामान् सह ब्रह्मणा विपश्चितेत्यादिश्रुतिभिः मोक्षेऽपीश्वराधीन-ज्ञातृत्वकर्तृत्वभोक्तृत्वादेः प्रतिपन्नतया उदाहृतश्रुतिस्मृतीनां जीवे स्वतंत्रकर्तृत्वनिषेधपरत्वस्यैव युक्तत्वाच्च। 'सर्वं ह पश्यः पश्यती'-त्यादिश्रुतीनां मुक्तविषयत्वमेव नेति वदतः उन्मत्तवदुपेक्षणीयत्वाच्च।

यदपि पुरुषो न बध्यते न मुच्यते नापि संसरति। किंतु, प्रकृतिरेव बध्यते मुच्यते संसरति चेति। तदपि 'तयोरन्यः पिप्पलं स्वाद्वत्ति' (श्वे. उ. अ. ४, मं ६) तस्मिंश्चान्यो मायया संनिरुद्धः, 'अजोह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' (श्वे. उ. अ. ४, मं. ५) "अनीशश्चात्मा बध्यते भोक्तृभावात्" 'ज्ञात्वा देवं मुच्यते सर्वपाशैः' (श्वे. उ. अ. ४, मं. १६) "परामृतात्परिमुच्यन्ति सर्वे" 'शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि' (भ. गी. अ. ७, श्लो. २८) इत्यादिश्रुतिस्मृतिभि-र्जीवात्मन्येव बन्धमोक्षयोः संसारस्य च प्रतिपादनात् बन्धसंसारयोः प्रकृत्यधीनत्वस्यैव प्रतिपादनाच्च॥ "कार्यकरण[1]कर्तृत्वे हेतुः प्रकृति-रुच्यते" (भ. गी. अ. १३, श्लो. २०) इति भेदेन प्रतिपादनात् साधा-रण्यज्ञापनार्थमिति न दोषः॥

यत्तु भूतानां विकृतित्वमेव न प्रकृतित्वमित्युक्तं तन्न घटादीनां वृक्षादीनां च पृथिव्यादिविकाराणां दर्शनेन पृथिव्यादीनां प्रकृतित्वस्या-प्यंगीकर्तव्यत्वात्। न च तत्वांतरोपादानत्वमेवेह प्रकृतित्वं विवक्षितम्। घटादयस्तु न पृथिव्यादिभ्यस्तत्वांतरमिति नोक्तदोषः इति वाच्यम्। त्वन्मते महदादीनामपि प्रकृत्यनन्यत्वात्। "कारणभावाच्च सत्कार्य-मित्यत्र" (सां. का. ९) कार्यस्यैव कारणरूपत्वादित्यर्थः। "न हि कारणात् भिन्नं कार्यं कारणं च सदिति कथं तदभिन्नं कार्यमसद्भवेदिति"

1. पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते॥ इत्युत्तरार्धम्।

वाचस्पतिना व्याख्यातत्वात्। न च कार्यकारणयोरभिन्नत्वान्नात्यन्ताभिन्नरूपत्वमिति युक्तम्। तस्यैव कार्यसत्वोपपादकत्वात्। भेदस्यापि सत्वे कार्यस्यासत्वापातेन पराभिमतसत्कार्यवादासिद्धिप्रसंगात्। एवं च सांख्यमते कार्यकारणयोरत्यन्ताभेदाभ्युपगमेन, "हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिंगं सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तमिति" (सां. का. १०) व्यक्ताव्यक्तवैधर्म्यप्रतिपादनमप्यसंगतम्। न ह्येकस्यैव तद्रूपत्वमतद्रूपत्वं च संभवति॥

किंच कार्यकारणयोर्भेदोऽप्यंगीकार्यः। न त्वत्यंताभेदः। तथात्वे कार्यकारणभावानुपपत्तेः। अनन्यथासिद्धनियतपूर्वभावित्वस्य कारणत्वात्। तथाभूतपश्चाद्भावित्वस्य कार्यत्वात्। न ह्युपादानोपादेययोरैक्ये तदुभयं संभवति। प्रत्युतैकतरपरिशेषापत्तेः। न चैकत्वेप्यवस्थाभेदमादाय तदुभयं संभवतीति युक्तम्। सांख्यमते तस्या अपि सत्वाभ्युपगमेन तामादाय पश्चाद्भावित्वांगीकारायोगात्।

"असदकरणादुपादानग्रहणात्सर्वसंभवाभावात्।
शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्यम्॥
(सां. का. श्लो. ९)

इति वदता त्वया कार्यमात्रस्य विद्यमानत्वोपगमात्। अवस्थाया असत्या एवोत्पत्यंगीकारेच सर्वत्रासत्कार्यवादापत्तेः।

किंच सांख्याभिमतसत्कार्यवादो नोपपद्यते। पूर्वमपि कार्यस्य सत्वे कारकव्यापारवैयर्थ्यात्। न चाभिव्यक्त्यर्थमसाविति युक्तम्। कार्यकारणयोरभेदे कारणाभिव्यक्तेरेव कार्याभिव्यक्तिरूपतया तद्वैयर्थ्यात्। किं चाभिव्यक्तिरसती सती वा। नाद्यः। असत्कार्यवादापातात्। तद्वत् घटादीनामसतामेवोत्पत्तिरित्यत्र सुवचत्वाच्च। घटादीनामभिव्यक्तिरभिव्यक्तेस्तूत्पत्तिरित्यत्र नियामकाभावाच्च। न द्वितीयः कारकव्यापारवैयर्थ्यात्। तस्याभिव्यक्त्यभिव्यक्त्यर्थत्वे च तस्या अपि सत्वेन तत्र तत्रैवमित्यनवस्थापातात्। न च बीजांकुरादेरिवासौ न दोषः। तस्य सिद्धविषयत्वात्। अत्र च तदभावात्।

अभिव्यक्ताया एवाभिव्यक्तेर्घटो जात इत्यादिवत्प्रतीत्युपपादकत्वेन मूलक्षयकरत्वेन तस्याः प्रकृते दोषत्वात् । उत्पत्तेरुत्पत्तिः स्वयमेवेति नानवस्था । आद्यसमयसम्बन्धस्यैवोत्पत्तिपदार्थत्वात्तस्य च स्ववृत्तित्वात्प्रमेयत्वे प्रमेयत्ववत्सिद्धविषयत्वेनात्माश्रयस्यादोषत्वात् ।

किंच घटाभिव्यंजकसामग्र्यैव मृत्कूटे विद्यमानानां शरावादीनामपि अभिव्यक्तिः स्यात् । घटायोन्मीलितं चक्षुः पटं न हि न बुध्यत इति न्यायात् । घटाभिव्यक्त्यर्थमारोपितेन दीपेन शरावादीनामप्यभिव्यक्तिदर्शनाच्च । न च वर्णेष्विव प्रतिनियतव्यंजकव्यंङ्ग्यत्वमंगीकार्यमिति वाच्यम् । वर्णनित्यत्वस्यानन्यथासिद्धप्रमाणप्रमितत्वेन ताल्वोष्ठपुटव्यापारादेः प्रतिनियतध्वनिव्यंजकत्वेनैवोपयोगस्य वक्तव्यत्वेन वैषम्यात् ।

किंच दीपेनेव दण्डादिनापि घटादीनामभिव्यक्त्यंगीकारे तद्दण्डादिना घटोऽभिव्यक्त इति प्रतीतिः स्यान्नोत्पन्न इति । न चाभिव्यक्तौ तारतम्यं प्रमाणाभावात् । न च कूपखननानन्तरमभिव्यक्ते जलेप्युत्पन्नत्वव्यवहारदर्शनात् निष्पीडनानंतरं तैलमुत्पन्नमिति व्यवहारदर्शनात् देवदत्तो जात इति व्यवहारदर्शनाच्च नोक्तदोष इति वाच्यम् । जलादिषु निरूपणदशायामभिव्यक्तत्वव्यवहारस्यापि दर्शनेन घटादिषु सर्वथैवोत्पन्नव्वहारसत्वेन वैषम्यात् ।

तस्मात्साङ्ख्यरीत्या सत्कार्यवर्णनमनुपपन्नम् ॥

यत्तु " उभयात्मकमत्र मनः " इति मनसः कर्मज्ञानेन्द्रियोभयात्मकत्वमुक्तम् । तन्न । वागादीनामिवासाधारणक्रियाभावात् । मनोऽधिष्ठितानां वागादीनां क्रियाजनकत्वेन मनसः कर्मेन्द्रियत्वे कालादृष्टेश्वरादीनामपि तथात्वापत्तेः । न च चक्षुरादीन्द्रियेण सम्मुग्धतो गृहीतं वस्त्वेवं विधमेव नानेवंविधमिति मनः सम्यग्विवेचयतीति विवेचनरूपो व्यापारोऽसाधारणोऽस्तीति तस्य कर्मेन्द्रियत्वं युक्तमिति वाच्यम् । विवेचनस्य ज्ञानविशेषरूपत्वेनाक्रियारूपत्वात् । इदमर्थमेवेति ज्ञानस्यैव विवेचनरूपत्वात् । कर्मेन्द्रियं तु पाय्वादि मनोनेत्रादि धीन्द्रियमिति लोकप्रसिद्ध्यनुसारेण मनसः केवलज्ञानेन्द्रियत्वस्यैव युक्तत्वाच्च ।

ननु त्वन्मते कथं तस्य ज्ञानेन्द्रियत्वमसाधारणस्य ज्ञानलक्षणफलस्याभावात्। न तावत् बाह्यविषयज्ञानं प्रति तस्य करणत्वं तस्य यथायोगं प्रत्यक्षादिप्रमाणफलत्वान्मनसो बहिस्स्वातन्त्र्यानभ्युपगमाच्च। नाप्यान्तरपदार्थविषयज्ञानं प्रति तस्य करणत्वमात्मनः स्वप्रकाशत्वेन तदनपेक्षत्वात्। सुखदुःखज्ञानेच्छादीनां च [1]साक्षिसिद्धत्वात्। न च स्मृतिं प्रति तस्य करणत्वं तस्याः संस्कारमात्रजन्यत्वात्। परोक्षज्ञानत्वेनेन्द्रियकरणकत्वायोगाच्चेति। चेन्न। स्मृतेः साक्षात्काररूपत्वोपगमात्। न चैवं स्मृत्यनन्तरं साक्षात्करोमीति प्रतीत्यापत्तिः। नैयायिकादिमते सामान्यलक्षणप्रत्यासत्तिजन्यज्ञानेष्विव तदभावेऽपि साक्षत्कारात्वोपपत्तेः। न च मनसो बहिरस्वातन्त्र्यम्। ज्ञानोपनीतविषये वहिरर्थेऽपि तस्य स्वातन्त्र्योपगमात्। संस्कारस्य सहकारित्वोपगमाच्च।

किं च मोक्षसाधनीभूतब्रह्मसाक्षात्कारकरणत्वेन मनसः इन्द्रियत्वम्। न च तस्य चक्षुरादि करणकत्वम्। 'न चक्षुषा गृह्यते नापि वाचेति' (मुण्डकोपनिषत् खं. ३, मं. ८) तद्ग्राह्यत्वनिषेधात्। नापि शब्दकरणकत्वम्। तस्य परोक्षज्ञानैकफलत्वात्। नापि ध्यानकरणकत्वम्। अस्यापरोक्षत्वात्। ज्ञानकरणकस्य परोक्षत्वनियमात्। अपरोक्षज्ञानस्येन्द्रियकरणकत्वावश्यम्भावाच्च। न च ब्रह्मसाक्षात्कारोऽकारणक इति युक्तम्। ज्ञानक्रियायाः सकरणत्वनियमात्। तस्मात्तस्य मनःकरणकत्वम्। न च ब्रह्मसाक्षात्कारस्य मनःकरणकत्वे मानाभावः उक्ते परिशेषस्यैव तत्र प्रमाणत्वात्। मनसैवानुद्रष्टव्य-(बृ. उ. ४, अ. ब्रा. ४, मं. १९) मित्यादिश्रुतीनां सत्वाच्च। न च सा श्रुतिरुपचरितार्था। मुख्यार्थे बाधकाभावात्। न च यन्मनसा न मनुते इति श्रुत्यन्तरमेव बाधकमिति वाच्यम्। दृश्यते त्वग्र्यया बुध्येत्यादिश्रुत्यनुसारेण तस्यानवहितमनोगम्यत्वनिषेधपरत्वकल्पनेन विरोधाभावादित्यलं शाखाचंक्रमणेन। तस्मान्मनसः केवलज्ञानेन्द्रियत्वमेव। न तु कर्मेन्द्रियत्वमिति स्थितम्।

---

1. सुखं दुःखं भवो भावो भय चाभयमेव च।
साक्षिसिद्धा न कश्चिद्धि तत्र संशयवान् क्वचित्॥

एतेन अग्नीषोमीयादिहिंसायाः क्रत्वङ्गभूतायाः किञ्चित्पापसाधनत्वमप्यस्तीति साङ्ख्योक्तं निरस्तम् । तस्याः पापसाधनत्वे प्रमाणाभावात् । न च न हिंस्यात् सर्वाभूतानीति तस्या निषेधात्पापसाधनत्वमिति वाच्यम् । निषेधस्य यदग्नीषोमीयं पशुमालभते इति विशिष्य विहितेतरपरत्वात् । अन्यथा श्रुतिद्वयविरोधापत्तेः । सामान्यशास्त्रस्य विशेषशास्त्रेण बाधस्याङ्गीकर्तव्यत्वाच्च ।

ननु विरोधे हि बलीयसा दुर्बलं बाध्यते । न चेहास्ति विरोधः । भिन्नविषयत्वात् । तथा हि — न हिंस्यादिति निषेधेन हिंसाया अनर्थहेतुभावो ज्ञाप्यते । न क्रत्वनङ्गत्वमपि । अग्नीषोमीयवाक्येन च पशुहिंसायाः क्रत्वङ्गभावो ज्ञाप्यते । न त्वनर्थहेतुत्वाभावोऽपि । न चानर्थहेतुत्वक्रतूपकारत्वयोः कश्चिद्विरोधः । एवं च हिंसा पुरुषस्य दोषमात्रं वक्ष्यति । क्रतोश्चोपकरिष्यतीति युक्तम् । तस्याः सुपरिहरस्वल्पपापहेतुत्वम् । आह च भगवान् पञ्चशिखाचार्यः— "स्वल्पसङ्करः सुपरिहर इतीति" ।

अत्र केचिदाहुः अग्नीषोमीयपश्वालम्भनस्य हिंसारूपत्वे हि न हिंस्यादिति निषेधेन क्रोडीकृतत्वेन पापहेतुत्वम् । न च तस्य हिंसारूपत्वमस्ति । "न वा उवे न म्रियसे न रिष्यसि देवां इदेषि पथिभिः सुगेभिः । यत्र यन्ति सकेतो नापि दुष्कृतः तत्र त्वादेवः सविता दधातु ॥" इति मन्त्रवर्णेन पशुस्वर्गसिद्धिपर्यवसायितया पश्वनुग्रहरूपत्वेनैव सिद्धतया क्रोधादिकृतस्य शरीरावयवदाहच्छेदादेः निग्रहत्वेऽपि प्राणशान्त्यर्थं कृतस्य तस्यानुग्रहरूपत्वेनानिग्रहत्ववत् पश्वनुग्राहकस्य क्रत्वर्थस्य पशुमारणस्याहिंसात्वोपपत्तेरिति ।

अत्रोच्यते । अग्नीषोमीयहिंसायाः पश्वनुग्राहकत्वेऽपि हिंसात्वमस्त्येव । प्राणशान्त्यर्थं कृतस्य शरीरावयवदाहच्छेदादेः तत्पुरुषानुग्रहरूपत्वेऽपि दाहच्छेदादिरूपत्वदर्शनेन पशुमारणस्यापि हिंसारूपत्वोपपत्तेः । प्राणवियोजनानुकूलव्यापारस्यैव हिंसाशब्दार्थत्वात् । "न वा उवे म्रियसे नरिष्यसीति" मरणाद्यभावोक्तेरपि 'अपशवो वा अन्ये गोऽश्वेभ्यः' इत्यादाविव प्रत्यक्षविरोधेन प्रशंसापरत्वेन तदनुसारेणाहिंसा-

रूपत्वासिद्धेश्च । न चैवमग्नीषोमीयपशुमारणस्य हिंसारूपत्वे पापसाधनत्वं स्यादिति युक्तम् । तस्य निषेधाविषयत्वात् । तथा हि हिंसा हि द्विविधा पुरुषार्थरूपा क्रत्वर्थरूपा चेति । तत्र निषेधस्य [1]पुरुषार्थभूता हिंसैव विषयः । न क्रत्वर्थभूतहिंसाऽपि । हिंसात्वाविशेषात्तामपि विषयीक्रियादिति चेन्न । निषेधस्य शीघ्रप्रतीतिकपुरुषार्थहिंसार्थव्यावर्तनेन निवृत्ततया विलम्बितोपस्थितिकक्रत्वर्थहिंसास्पर्शाभावात् । 'न हिंस्यादित्यत्र' पुरुषार्थहिंसाया एव धातुना वेद्यमानत्वेन तस्या एव शीघ्रोपस्थितिकत्वात् । अत्र क्रतूपस्थापकाभावेन क्रत्वर्थहिंसाया अनुपस्थितत्वेन निषेधस्य तदविषयत्वोपपत्तेः । 'हिंसात्ववैदिकी या तु तयानर्थो भवेद्ध्रुवम् । वेदोक्तया हिंसया तु नैवानर्थः कथञ्चन ।' इति भाष्योदाहृतस्मृतिरप्युक्तार्थपरेति न कश्चिद्दोष इति । तस्मादग्नीषोमीयहिंसायाः पापसाधनत्वमिति साङ्ख्योक्तमनुपपन्नम् ।

अनेन योगमतमपि निरस्तं वेदितव्यम् । यद्यपि सकलवेदप्रवर्तनाधिकृतेन सर्वज्ञेन हिरण्यगर्भेण योगमतं प्रवर्तितम् । यद्यपि सत्यभूताः प्रकृतिपुरुषेश्वराः क्लेशकर्माद्यपरामृष्टः प्रणवप्रतिपाद्यः सर्वलोकगुरुः पुरुषः ईश्वरः मुमुक्ष्वपेक्षिताष्टाङ्गोपेतयोगश्च तत्र प्रतिपादिताः । तथापि ईश्वरस्य क्रियाशक्तिरहिततया साङ्ख्यपुरुषवन्निर्व्यापारत्वं सन्निधिमात्रेण जगत्सर्जनोपकारकत्वं प्रकृतिप्राधान्यं वेदान्तानां तादृशप्रकृतिपरत्वमित्यादि वेदान्तविरुद्धार्थान्तरप्रतिपादनेन तन्मतं न प्रेक्षावदुपादेयम् । तथाहि ।

न तावदीश्वरस्य निर्व्यापारत्वम् । 'तदैक्षत' (छां. अ. ६. खं २ मं. ३) तत्तेजोऽसृजत 'तदात्मानं स्वयमकुरुत' "तत्सृष्ट्वा तदेवानुप्राविशत्" (तै. उ. आनंदवल्लीमंत्रः) सोऽकामयत बहुस्यां प्रजायेये-' त्यादि श्रुतिभिरीश्वरव्यापारेणैव जगदुत्पत्तेः प्रतिपादनात् । "स्वाभाविकी ज्ञानबलक्रियाचेति" (श्वे. उ. ६ अ. मं ८) ज्ञानक्रियाशक्त्यादीनां स्वाभाविकत्वप्रतिपादनाच्च । न च 'न तस्य कार्यं करणं च

1. पुरुषप्रयोजनकेत्यर्थः ।

विद्यते' (श्वे. उ. ६ अ. मं ८) इति पूर्ववाक्ये क्रियामात्रनिषेधात्, 'असंगोह्ययं पुरुषः' (बृ. उ. अ. ४ ब्रा. ३ मं १५) इत्यादिश्रुतिभिस्तस्य संगमात्रनिषेधात्। 'मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्। (भ. गीता अ. ९ श्लो. १०) इतीश्वरस्य साक्षित्वमात्रेण प्रकृतेर्जगदुत्पत्तिप्रतिपादनाच्च पूर्वोदाहृतश्रुतीनां प्रकृत्या जगत्सृष्टौ कर्तव्यायामीश्वरस्य साक्षित्वमात्रप्रतिपादनपरत्वमेवांगीकर्तव्यमिति वाच्यम्। 'न तस्य कार्य'मित्यादेरीश्वरस्य जगत्सर्जने कर्तव्ये न किंचित्प्रयोजनम्। नापि 'स्वापेक्षयाऽति'शयितं साधनमित्यर्थपरत्वात्। असंगश्रुतेश्च बंधराहित्यपरत्वात्। अध्यक्ष्यत्वस्याप्यधिष्ठातृत्वरूपत्वाच्च। अन्यथा 'अस्मान्मायी सृजते विश्वमेतत्' (श्वे. उ. ४ अ. मं ९) इति श्रुतिविरोधप्रसंगात्। एतेन प्रकृतिप्राधान्यमिति निरस्तम्। 'तमो वा इदमेकमास तत्परेणेरितं विषमत्वं प्रयाति' इत्यादिश्रुतिभिरीश्वरस्यैव नियामकत्वप्रतिपादनात्। 'अजामेकां (श्वे. उ. अ. ४ मं. ५) मायां तु प्रकृतिं विद्यादित्यादिषु (श्वे. उ. अ. ४ मं. १०) प्रकृतेः प्रतिपादनेऽपि सर्वत्र वेदान्तेषु प्राधान्येन सर्वजगत्कारणस्येश्वरस्य प्रतिपादनाच्च।

न च सांख्ययोगयोः सर्वज्ञकपिलहिरण्यगर्भप्रणीतत्वेनोपादेयत्वम्। तयोरपि क्वचिदंशे भ्रम[1]संभवात्। तयोस्तदसंभवे च विप्रलिप्सया तथाविधशास्त्रप्रवर्तनोपपत्तेश्च सांख्ययोगमतयोर्बादरायणेन निराकृतत्वाच्चेति[2] दिक्॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां श्रीमत्सुरेन्द्रतीर्थपूज्यपादानां शिष्येण सर्वतन्त्रस्वतन्त्रेण विजयीन्द्रभिक्षुणा विरचिते सर्वसिद्धान्तसारासारविवेचने सांख्ययोगमतभङ्गो नाम पंचमः परिच्छेदः॥

---

1. अक्षपादप्रणीते च काणादे साङ्ख्ययोगयोः।
त्याज्यः श्रुतिविरुद्धोंऽशः श्रुत्यैकशरणैः नृभिः॥
जैमिनीये च वैयासे विरुद्धांशो न कश्चन्।
श्रुत्या वेदार्थविज्ञाने श्रुतिपारं गतौ हि तौ॥
इति पराशरोपपुराणवाक्यानि॥

यं न पश्यन्ति योगिन्द्राः साङ्ख्या अपि महेश्वरम् ।
अनादिनिधनं ब्रह्म तमेव शरणं व्रज ॥ इति कूर्मपुराणम् ॥

2. ॐ रचनानुपपत्तेश्च नानुमानम् ॐ ॥ ब्र. सू. अ. २ पा. २ सू. १) अत्रेश्वरनिरपेक्षाचेतनप्रकृतेरेवमहदादिकार्यकरणे प्रवृत्तिरिति यन्निरीश्वर-साङ्ख्यमतं तन्निराचकार सूत्रकारः । ॐ अन्यत्राभावाच्च न तृणादिवत् ॐ ॥ ब्र. सू. अ. २ पा. २ सू. ५) अत्र प्रधानमेव जगत्कर्तृ तस्य गुणभूतत्वेनेश्वरोऽस्तीतिवदतः सेश्वरसाङ्ख्यस्य पतञ्जलेर्मतं निराकरोति सूत्रकृत्। निरीश्वर-साङ्ख्यशास्त्रप्रणेता कपिलो न विष्णुः। किन्त्वग्न्यवतारः कपिलान्तरम्। अग्निः सकपिलोनाम साङ्ख्यशास्त्रप्रवर्तकः " इति स्मृतेः ॥

कपिलो वासुदेवाख्यः तन्त्रं साङ्ख्यं जगाद ह ।
ब्रह्मादिभ्यश्च देवेभ्यो भृग्वादिभ्यस्तथैव च ॥
तथैवासुरये सर्ववेदार्थैरुपबृंहितम् ।
सर्ववेदविरुद्धं च कपिलोऽन्यो जगाद ह ॥
साङ्ख्यमासुरयेऽन्यस्मै कुतर्कपरिबृंहितम् ॥

## ॥ अथ नैयायिकवैशेषिकमतभङ्गः ॥

इदानीं नैयायिकमतं निराक्रियते।

नन्विदमनुपपन्नम्। "पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः। वेदास्स्थानानि विद्यानां धर्मस्य च चतुर्दश॥ (याज्ञवल्क्यस्मृतिः १/३) अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः। पुराणं धर्मशास्त्रं च विद्याह्येताश्चतुर्दश॥ विष्णु पु.[1]) इति चतुर्दशविद्यास्थानेषु परिगणितस्य न्यायविस्तरस्य धर्मप्रमित्युपयोगित्वेन धर्मशास्त्रादिवत्तस्य वैदिकैरनुसरणीयत्वात्। मन्वादिस्मृतिवत् गौतमस्मृतेरपि सकलवैदिकोपजीव्यत्वेन तत्कृतन्यायविस्तरस्यापि तथात्वावश्यंभावाच्च। गौतमप्रणीतन्यायविस्तरस्य पक्षिलेन[2] महामुनिना भाष्यप्रणयनपूर्वकं प्रवर्तितत्वाच्च। तस्मान्न्यायविस्तरदूषणं वैदिकेन कर्तुमयुक्तमिति चेन्न।

प्रमाणस्वरूपनिरूपणांशे तस्योपजीव्यत्वेऽपि तत्प्रतिपादितस्य परमाणुकारणत्ववेदपौरुषेयत्वादेः पाषाणकल्पमोक्षादिपदार्थानां च वेदान्त[3]विरुद्धतयाऽवश्यं निरसनीयत्वात्। उद्योतकरवाचस्पतिप्रभृतिव्याख्यातृभिमतार्थान्तराणां च तथात्वेन तेषामपि निरसनीयत्वाच्च।

---

1. आयुर्वेदो धनुर्वेदो गन्धर्वश्चेति ते त्रयः।
अर्थशास्त्रं चतुर्थं च विद्याह्यष्टादशैव ताः॥ विष्णु. पु.)

2. न्यायदर्शनभाष्यकर्तुर्महामुनेर्वात्स्यायनस्य पक्षिलस्वामीति नामान्तरम्।

3. पद्मपुराणे ब्रह्मयोगदर्शनातिरिक्तानां दर्शनानां निन्दाप्युपलभ्यते। यथा तत्र पार्वतीं प्रतीश्वरवाक्यम्—
श्रुणु देवि प्रवक्ष्यामि तामसानि यथाक्रमम्।
येषां श्रवणमात्रेण पातित्यं ज्ञानिनामपि॥
प्रथमं हि मयैवोक्तं शैवं पाशुपतादिकम्।
मच्छक्त्यावेशितैर्विप्रैः संप्रोक्तानि ततःपरम्॥

**वस्तुतस्तु न्यायविस्तराख्यं विद्यास्थानं[1] भगवत् बादरायणकृत ब्रह्मतर्काभिधानं शास्त्रं, न गौतमादिप्रणीतं, तस्य सर्वात्मना वेदविरुद्धत्वात् । तदुक्तमनुव्याख्याने ।**

**प्रमाणन्यायसच्छिक्षाक्रियते तर्कशास्त्रतः ।**
**मायान्यायैस्तु तत्सिद्धैर्मीमांसा मेयशोधनम् ॥**

---

कणादेन तु संप्रोक्तं शास्त्रं वैशेषिकं महत् ।
गौतमेन तथा न्यायं साङ्ख्यन्तु कपिलेन वै ॥
द्विजन्मना जैमिनिना पूर्वं वेदमयार्थतः ।
निरीश्वरेण वादेन कृतं शास्त्रं महत्तरम् ॥
धिषणेन तथा प्रोक्तं चार्वाकमतिगर्हितम् ।
दैत्यानां नाशनार्थाय विष्णुना बुद्धरूपिणा ॥
बौद्धशास्त्रमसत् प्रोक्तं नग्ननीलपटादिकम् ।
मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमेव च ।
मयैव कथितं देवि ! कलौ ब्राह्मणरूपिणा ॥
अपार्थं श्रुतिवाक्यानां दर्शयल्लोकगर्हितम् ।
कर्मस्वरूपत्याज्यत्वमत्र च प्रतिपाद्यते ।
सर्वकर्मपरिभ्रंशान्नैष्कर्म्यं तत्र चोच्यते ॥
परात्मजीवयोरैक्यं मयात्रप्रतिपाद्यते ।
ब्रह्मणोऽस्य परं रूपं निर्गुणं दर्शितं मया ॥
सर्वस्य जगतोऽप्यस्य नाशनार्थं कलौ युगे ।
वेदार्थवन्महाशास्त्रं मायावादमवैदिकम् ।
मयैव कथितं देवि जगतां नाशकारणात् ॥ इति ॥

1. सामवेदीयकेनोपनिषदि "तस्मै तपो दमः कर्मेति प्रतिष्ठा । वेदाः सर्वाङ्गानि सत्यमायतनम्" । इत्यत्र सत्यमितिपदेन तर्कशास्त्रं च सत्यमित्युच्यते ॥ अत्र तर्कशास्त्रं बादरायणकृतं ब्रह्मतर्काभिधं शास्त्रमेव विवक्षितम् ।

ब्रह्मतर्कं च भगवान् स एव कृतवान् प्रभुः ।
पंचाशत्कोटिविस्तारान्नारायणतनौ कृतात् ।
उद्धृत्य पंचसाहस्रं कृतवान् बादरायणः ॥ इति ॥
अतो गौतमानुसारिनैयायिकमतं निरसनीयम् ॥

तत्र प्रमाणादयः षोडशपदार्थाः[1], प्रमाणानि च प्रत्यक्षानुमानोपमानशब्दा[2] इति चतुर्विधानि, आत्मशरीरेन्द्रियादिरूपं[3]प्रमेयं द्वादशविधमित्यादिरूपेण तन्मतप्रक्रिया प्रसिद्धैव। तत्र प्रधानप्रमेयदूषणं प्रथमं क्रियते। परमाणूनां जगदुपादानत्वं तावदयुक्तम्। 'यदा तमस्तं न दिवा न रात्रिः'[4]। 'तमो वा इदमेकमास', मायां तु प्रकृतिं विद्यात्' 'अजामेकां' (श्वे. उ. ४ अ. मं. ५) 'आसीदिदं तमोभूतम्'[5] (मनु. स्मृ. अ. १ श्लो. ५) — इत्यादिश्रुतिस्मृतिभिस्तमोमायाप्रकृत्यजादि शब्दितस्यान्यस्यैव जगदुपादानत्ववेदनात्। न च तमोमायादिशब्दानां परमाणुवाचित्वादविरोध इति युक्तम्। लोकवेदयोस्तेषां तद्वाचितायाः प्रसिद्ध्यभावात्। न लक्षणया तत्परत्वम्। अर्थान्तरपरत्वेनापि तदुपपत्तेः ॥

---

1. प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्वज्ञानान्निःश्रेयसाधिगमः (गौ. न्या. सू. १)

2. प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि। (गौ. न्या. सू. ३)

3. आत्मशरीरेन्द्रियार्थबुद्धिमनः प्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्। (गौ. न्या. सू. ९)

4. न सन्नचासञ्छिव एव केवलः। तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञाच तस्मात्प्रसृता पुराणी॥ इति शेषः। (श्वे. उ. ४ अ. मं. १८)

5. असीदिदं तमोभूतमप्रज्ञातमलक्षणम्।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ॥

ननु 'यदा तमः' (श्वे. उ. अ. ४, मं. १९) इति मन्त्रे तमःशब्देनान्धकारः उच्यते। न त्वदभिमतं जगदुपादानं प्रमाणाभावात्। प्रसिद्धिविरोधापत्तेश्च। 'मायां तु प्रकृतिं विद्यात्'[1] (श्वे.उ.अ. ४, मं.१०) इत्यत्र च मायाप्रकृतिशब्दाभ्यां जीवादृष्टमुच्यते। तस्य जगत्सृष्टौ सहकारित्वात्। तदुक्तं न्यायकुसुमांजलौ (प्रथमस्तबकेऽन्तिमश्लोकः) "इत्येषा[2] सहकारिशक्तिरसमा माया दुरुन्नीतितो मूलत्वात्प्रकृतिः॥" इति॥

'अजा' मन्त्रे च पार्थिवाप्यतैजसपरमाणव एवोच्यन्ते। न त्वदभिमता प्रकृतिः। 'लोहितशुक्लकृष्णामिति विशेषितत्वात्। त्वदभिमतप्रकृतेश्च निरूपत्वात्। न चैवमेकत्वविशेषणानुपपत्तिः। तस्य सङ्घातनिष्ठत्वेनाविरोधात्। त्वयापि मूलप्रकृतेरनेकावयवसङ्घातरूपत्वोपगमाच्च। एवं च कार्यानुरूपमेव जगदुपादानमङ्गीकर्तव्यम्। तच्च परमाणुरूपम्। कार्यानुरूपत्वादिति चेदुच्यते।

"यदा तम इति मन्त्रेणान्धकारः न प्रतिपाद्यते प्रलये तस्य अनवस्थानात्। प्रलयस्यादृष्टाद्यतिरिक्तकार्यनाशरूपत्वादन्धकारस्य च कार्यत्वोपगमात्। विनाशाभ्युपगमाच्च। प्रौढप्रकाशकयावत्तेजःसंसर्गाभावरूपत्वेऽपि तस्योत्पत्तिविनाशाभ्युपगमाच्च। न च प्रलयेऽन्धकारातिरिक्तकार्यनाशाभ्युपगमात्तमःशब्दस्यान्धकारवाचित्वे विरोधाभाव इति वाच्यम्।

"नाहो न रात्रिर्न नभो न भूमिर्नासीत्तमोज्योतिरभून्न चान्यत्" इति विष्णुपुराणे प्रलयेऽन्धकारासत्त्वावेदनेन तथा सङ्कोचायोगात्। तथा च यदा तमः तमो वा इदमेकमास, आसीदिदं तमो भूतम्

1. मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्॥

2. मूलत्वात्प्रकृतिः प्रबोधभयतोऽविद्येति यस्योदिता॥
देवोऽसौ विरतप्रपञ्चरचना कल्लोलकोलाहलः।
साक्षात्साक्षितया मनस्यभिरतिं बध्नातु शान्तो मम॥

इत्यादिश्रुतिस्मृतिषु तमःशब्देन मूलप्रकृतिरेवोच्यते। नान्धकारः। तस्य वियदादिप्रपञ्चानात्मकत्वात्। तल्लयानाश्रितत्वाच्च। अत एव न जीवादृष्टमपि तमःशब्दार्थः।

किं च 'मायां तु प्रकृतिं विद्या'(श्वे. उ. अ. ४, मं. १०)दित्यत्रापि मायाशब्देन न जीवादृष्टमुच्यते। तथा सति तत्र प्रकृतित्वापरपर्यायोपादानत्वविधानायोगात्। 'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि' (भ. गी. अ. १३, श्लो. १९)। 'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः' (भ. गी. अ. ३, श्लो. २७)। 'मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्'[1] (भ. गी. अ. ९, श्लो. १०) इत्यादौ प्रकृतिशब्दस्य प्रधानपरत्वदर्शनेनात्रापि तत्परत्वमेव स्यात्। नोपादानपरत्वमिति चेत्। तथापि मायाया जीवादृष्टरूपत्वासिद्धितादवस्थ्यात्। 'जनिकर्तुः प्रकृति' (व्या. सू. १-४-३०)रित्यादौ प्रकृतिशब्दस्योपादानपरत्वदर्शनाच्च।

किं च 'दैवी ह्येषा गुणमयी मम माया दुरत्यया' (भ. गी. अ. ७, श्लो. १४) इत्यादिस्मृत्यनुसारेण 'मायां तु प्रकृतिं विद्या'दित्यत्र मायाशब्देन सत्वादिगुणका[2] मूलप्रकृतिरेव ग्राह्या न तु जीवादृष्टम्। 'देवात्मशक्तिं स्वगुणैर्निगूढां[3] पञ्चपूर्वा[4]मधीमः' इति परमोपक्रमे

---

1. 'हेतुनानेन कौन्तेय जगद्विपरिवर्तते'ति ॥

2. गुणिका—पाठान्तरम्।

3. ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्।
यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः ॥
(श्वे. उ. प्र. अ. मं. ३)

4. पञ्चस्रोतोम्बुं पञ्चयोन्युग्रवक्रां पञ्चप्राणोर्मिं पञ्चबुद्ध्यादिमूलाम्।
पञ्चावर्तां पञ्चदुःखौघवेगां पञ्चाशद्भेदां पञ्चपूर्वामधीमः ॥
(श्वे. उ. प्र. अ. मं. ८)

प्रतिपन्नायाः मूलप्रकृतेरेव मायाशब्दार्थत्वौचित्यात् । न च 'मायया[1] सन्निरुद्ध' (श्वे. उ. अ. ४, मं. ९) इति जीवनिरोधकत्वेनोक्तमाया जीवकर्मरूपेति वाच्यम् । मूलप्रकृतेरपि बन्धकत्वोपगमात् । बन्धमात्रस्यापि तदधीनत्वाच्च । तथा च श्रुतिः—"अनीशया शोचति मुह्यमानः"[2] (श्वे. उ. अ. ४, मं. ७) इति ॥

किञ्चाजामंत्रे पार्थिवाप्यतैजसपरमाणूनां प्रतिपादनमित्यनुपपन्नम् । 'अजो[3] ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' । (श्वे. उ. अ. ४, मं. ८) इति तस्या एकेन जीवेन जुषमाणत्वस्यान्येन भुक्तभोगायास्तस्यास्त्यज्यमानत्वस्य च प्रतिपादनात्परमाणूनां तथात्वस्यानङ्गीकारात् । तदारब्धस्थूलशरीरस्यैव तथात्वाभ्युपगमाच्च । न चाजामन्त्रस्य तथाविधस्थूलशरीरपरत्वमिति युक्तम् । एकत्वविशेषणबलेन जगदुपादानभूतमूलप्रकृतिपरत्वावश्यम्भावात् । एकशब्दस्य व्यक्त्यैक्यपरत्वे सम्भवति जात्यैक्यसमूहैक्यपरत्वायोगात् । मया प्रकृतेरनेकावयवात्मकत्वाभ्युपगमेऽपि जगतस्तत्परिणामत्वाभ्युपगमेन (तदारब्धत्वानभ्युपगमेन) च वैषम्यात् । न च मूलप्रकृतेः नीरूपत्वाभ्युपगमेन 'लोहितशुक्लकृष्णा'मिति रूपविशेषप्रतिपादनमसङ्गतमिति वाच्यम् । गुणत्रयप्रतिपादनपरत्वेन विरोधाभावात् । तत्र रूपाभ्युपगमे विरोधाभावात् । तत्र लोहितादिशब्दस्य च कार्यकारणाभेदाभिप्रायेण

---

1. छन्दांसि यज्ञाः क्रतवो व्रतानि भूतं भव्यं यच्च वेदा वदन्ति ।
अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया संनिरुद्धः ॥
(श्वे. उ. अ. ४, मं. ९)

2. समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचसि मुह्यमानः ।
जुष्टं यदा पश्यत्यन्यमीशमस्यमहिमानमिति वीतशोकः ॥

3. अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येकां भुक्तभोगामजोऽन्यः ॥
(श्वे. उ. अ. ४, मंः ५)

मूलप्रकृतावपि रूपविशेषप्रतिपादने विरोधाभावाच्च। तस्मात्प्रकृतेरेव जगदुपादानत्वं न परमाणूनाम्।

न च पृथिव्यादिकार्यानुरूपमेव तदुपादानं वाच्यमिति परमाणुसिद्धिरिति वाच्यम्। मूलप्रकृतेरपि जडत्वादिना कार्यानुरूपत्वात्। घटत्वपटत्वादिना परमाणूनामपि कार्याननुरूपत्वाच्च। पृथिवीत्वादिना कारणस्य कार्यानुरूपत्वं विवक्षितमिति चेन्न। घटादिकारणस्य कपालादेर्घटत्वाद्यभावेऽपि घटाद्युपादानत्वाभ्युपगमेनोक्तविवक्षाया अननुसरणीयत्वात्। किंच त्वन्मते चक्षुरादीनामनुद्भूतरूपस्पर्शवत्वेऽपि कथं तदुपादानभूतानामणूनामुद्भूतरूपस्पर्शवत्वमङ्गीक्रियते। तत्तददृष्टरूपसहकारिवशेन तथाभूताणूनामप्यनुद्भूतरूपस्पर्शचक्षुराद्युपादानत्वाङ्गीकारे च मूलप्रकृतौ पृथिवीत्वाद्यभावेऽपि तथाविधादृष्टवशेन पृथिव्याद्युपादानत्वसम्भवाच्चेति यत्किञ्चिदेतत्।

ननु प्रकृतेरनेकावयवात्मकत्वाभ्युपगमेन रूपवत्वाभ्युपगमेन च परमाणुकारणवाद एवापन्न इति न कश्चिद्विशेष इति चेन्न। मतद्वयेऽपि परिमाणारम्भकत्वरूपविशेषस्य सत्वात्। अणूनां सावयवत्वाभ्युपगमेन क्वचिदपि विश्रान्त्यनभ्युपगमेन च वैषम्यसत्वात्।

वस्तुतस्तु प्रकृतेर्न रूपस्पर्शादियोगित्वम्। तथा श्रीविष्णुपुराणवचनम्।

अव्यक्तं कारणं यत्तत् प्रधानमृषिसत्तमैः।
प्रोच्यते प्रकृतिः सूक्ष्मा नित्यं सदसदात्मिका॥
अक्षयं नान्यदाधारममेयमजरं ध्रुवम्।
शब्दस्पर्शविहीनं तत् रूपादिभिरसंहितम्॥
त्रिगुणं तज्जगद्योनिरनादिप्रभवाव्ययम्॥

इति॥

किं च परमाणुभिर्जगदारभ्यत इत्ययुक्तम्।

तथाहि—

किं पृथिव्यादिमहाकार्यं युगपदेव परमाणुभिरारभ्यते। किं वा द्व्यणुकादिप्रक्रमेण। नाद्यः। अनभ्युपगमात्। नानादेशस्थितानां

परमाणूनां यौगपद्यायोगाच्च। न चेश्वरेच्छावशात्तेषां यौगपद्यं संभवतीति वाच्यम्। अयोग्यार्थविषयेश्वरेच्छाया एवायोगात्। अन्यथेश्वरः कदाचिज्जलादेरप्यौष्ण्यं कुर्यात्। न चैवं तस्येश्वरत्वव्याकोपः। उपपन्नसर्वार्थविषयत्वेनैव तदीश्वरत्वोपपत्तेः। तावतैवास्मदादिवैलक्षण्योपपत्तेश्च। न द्वितीयः। प्रथमं द्वाभ्यां परमाणुभ्यां द्व्यणुकमुत्पद्यते। अनन्तरं त्रिभिर्द्व्यणुकैस्त्र्यणुकमित्येवमाकारेणोत्पत्तौ नियमाभावात्। प्रथमं त्रिभिश्चतुर्भिर्वा परमाणुभिरेकद्रव्योत्पत्तौ विरोधाभावाच्च। न च प्रथमं द्वाभ्यामेव परमाणुभ्यामेकद्व्यणुकारम्भसम्भवे त्रयाणां चतुर्णां वा तदारम्भकल्पने गौरवमिति वाच्यम्। सत्यां सामग्र्यां गौरवस्यापि सह्यत्वात्। न हि सामग्रीगौरवभयात् कार्यं नार्जयतीत्यस्ति।

किञ्चैवं एकस्या एव प्रकृतेर्जगदुपादानत्वसम्भवे अनेकेषां परमाणूनां तदुपादानत्वकल्पने गौरवमिति वैपरीत्यापत्तिः। किं च त्वदभिमतपरमाणुसद्भावे मानाभावः। पृथिव्यादिकार्यस्यास्मदभिमतप्रकृतिकार्यतया तदसाधकत्वात्।

ननु यदिदं जालसूर्यमरीचिस्थं सर्वतः सूक्ष्मतममुपलभ्यते तत् स्वल्पपरिमाणद्रव्यारब्धं कार्यत्वात्। घटादिवत्। न चासिद्धिः। चाक्षुषद्रव्यस्य कार्यत्वनियमात्। तदपि द्रव्यं कार्यं महद्द्रव्यारम्भकस्य कार्यत्वनियमात्। न च जालसूर्यमरीचिषूपलभ्यमानस्य द्रव्यस्य महत्वमसिद्धमिति वाच्यम्। तस्य चाक्षुषत्वेन महत्वस्याङ्गीकार्यत्वात्। महत्वसमानाधिकरणोद्भूतरूपवत एव चाक्षुषत्वात्। एवं च द्व्यणुकारम्भकतया परमाणुसिद्धिः। न च द्व्यणुकारम्भकस्यापि कार्यत्वम्। अनवस्थापातात्। मेरुसर्षपयोरनन्तावयवारब्धत्वाविशेषे तुल्यपरिमाणत्वापाताच्चेति चेत्। न। बीजांकुरादाविवानवस्थाया अदोषत्वात्। घट[1]करीरादेरनन्तावयवारब्धत्वाविशेषेऽपि त्वया परिमाणकृतवैलक्षण्यस्याभ्युपगमाच्च। तत्रानन्त्ये विशेषसत्वे च प्रकृतेऽपि तथास्तु।

---

1. करीरः, अङ्करः। 'वंशाङ्करे करीरोऽस्त्री तरुभेदे घटे च ना' (इत्यमरः)

किंचेश्वरस्य त्वन्मते ज्ञानेच्छाकृतिमत्त्वमित्यङ्गीकारोऽनुपपन्नः। तस्यानन्तगुणकत्वात्। तथा च श्रुतिस्मृतयः—

"अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुणाः" (अथर्वशिरः, आग्निवेश्यश्रुतिश्च) मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे—इत्याद्याः।

न चोदाहृतश्रुतिस्मृतीनां उपचरितार्थत्वमिति युक्तम्। मुख्यार्थपरत्वे बाधकाभावात्। न च कार्यत्वाद्यनुमानेन सिध्यन्नीश्वरो ज्ञानचिकीर्षाकृत्याश्रयत्वेनैव सिध्यतीति गुणान्तराणि तत्र नाङ्गीकार्याणीति वाच्यम्। ईश्वरस्यानुमानिकत्वस्यैवायोगात्। कार्यत्वाद्यनुमानस्य यथादृष्टोपसंहाररूपत्वेनासदादिवैलक्षण्यासिद्धेश्च। "नेन्द्रियाणि नानुमानं वेदाह्येवैनं वेदयन्ति"[1]—इत्यादिश्रुत्या तस्यानुमानगम्यत्वनिषेधपूर्वकं श्रुत्यैकसमधिगम्यत्वप्रतिपादनेन तद्विरोधापत्तेश्च।

किं च त्वन्मते समवाय्यसमवायिनिमित्तभेदेन कारणत्रैविध्योक्तिरप्यनुपपन्ना। समवायिनिमित्तभेदेन तद्द्वैविध्यस्यैव युक्तत्वात्। अन्यथा अनिमित्तकारणमित्यपि परिगणनं स्यात्। न चानिमित्तस्य कारणत्वं विरुद्धमिति वाच्यम्। दण्डादेरेव निमित्ततया कुलालादेः कर्तुरनिमित्ततया च तथा विभागकरणेऽपि विरोधाभावात्। यदि च कर्तुः कुलालादेर्निमित्तेऽष्वेवान्तर्भावः तदा तन्तुसंयोगादेरपि तत्रान्तर्भाव इति सुवचम्। पृथक्परिभाषाकरणस्योभयत्रापि समानत्वात्।

किं च षोडशपदार्थतत्वज्ञानस्य मोक्षसाधनत्वोक्तिरप्यनुपपन्ना। ब्रह्मज्ञानान्मोक्ष इत्यस्य श्रुति[2]स्मृति[3]सिद्धत्वेन तद्विरोधापत्तेः। न च परम्परया मोक्षसाधनत्वाभिप्रायोऽस्येति वाच्यम्। तथा सति भ्रमादेरपि तथात्वेन तत्वज्ञानपर्यन्तानुधावनायोगात्। न च मिथ्याज्ञानस्य बन्धहेतुत्वात्तस्य च सर्वविषयकत्वेन तन्निवृत्यर्थं सर्वविषयकं

1. पिप्पलादश्रुतिः।
2. "तमेवं विदित्वातिमृत्युमेति" इत्याद्याः श्रुतयः।
3. यस्य ज्ञानं तस्य मोक्ष इति नात्र विचारणा॥ इत्याग्नेये॥ ज्ञानान्मोक्षो भवत्येव॥ इति ब्रह्माण्डे॥

तत्वज्ञानमावश्यकं न तु ब्रह्ममात्रविषयकम्। तन्मात्रविषयकतत्वज्ञानेन तदितरविषयकमिथ्याज्ञाननिवृत्त्ययोगादिति वाच्यम्। "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे[1]"। इत्यादिश्रुत्यनुसारेण भिन्नविषयतत्वज्ञानस्यापि तथाविधमिथ्याज्ञाननिवर्तकत्वस्याङ्गीकार्यत्वात्। "आत्मा[2] वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः।" इति परमात्मविषयक-श्रवणादीनामेव कर्तव्यत्वविधानेन तद्विरोधापत्तेश्च। न प्राधान्याभिप्रायैव सा श्रुतिः। अन्यथा जीवाद्यर्थान्तरविषयश्रवणादिकं नानुष्ठीयेतेति वाच्यम्। तथाप्यत्यन्तव्यवहितसंशयादिनिवर्तकतत्वज्ञानस्य मोक्षसाधनत्वोक्त्यनुपपत्तेः।

किंच आत्यन्तिकदुःखध्वंसो मोक्ष इत्यनुपपन्नम्। 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति[3]'। 'शोकातिगो[4] मोदते स्वर्गलोके तेषां सुखं शाश्वतं[4] नेतरेषाम्' इत्यादि श्रुतिभिर्मोक्षे आनन्दानुभवस्य प्रतिपन्नत्वात्। न चोदाहृतश्रुतयो दुःखाभावाभिप्राया इति युक्तम्। स्वर्गादिसुखस्यापि असिध्यापत्तेः। न च मोक्षे देहेन्द्रियाभावेनानन्दाभावः। स्वरूपानन्दस्यैव तदानीमनुभूयमानत्वात्। न च मोक्षे जन्यज्ञानानङ्गीकारेण स्वरूपानन्दानुभवः कथमिति शङ्क्यम्। आत्मन एव ज्ञानरूपतया स्वविषयत्वलक्षणस्वप्रकाशत्वोपगात्। न चात्मनो ज्ञानानन्दादिरूपत्वे स्वप्रकाशत्वे च प्रमाणाभावः शङ्क्यः। एष हि द्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुष[5] इत्यादि श्रुत्या जीवात्मनो ज्ञानस्वरूपत्वसिद्धेः। सुखमहम-

---

1. मुण्डकोपनिषत्, (द्वि. ख. मं. ८)
2. बृ. उ. (६-५-६)
3. तैत्तिरीय (२-२)
4. कठोपनिषत् (प्र. अ. प्र. वल्ली, मं. १२, १८)
5. षट्प्रश्न. (खं. ४, मं. ९)

स्वाप्समिति तस्यानन्दरूपत्वसिद्धेश्च। 'अत्रायं पुरुषः स्वयंज्योति'[1]-रिति श्रुत्या तस्य स्वप्रकाशत्वसिद्धेश्च। न चेयं श्रुतिः परविषयेति शङ्कनीयम्। सुषुप्तिप्रक्रमात् परमात्मनोऽपि स्वप्रकाशत्वाभ्युपगमाच्च। न च स्वस्य स्वविषयत्वं विरुद्धम्। ईश्वरज्ञानस्य सर्वविषयत्वमभ्युपगच्छता त्वया तस्य स्वविषयत्वस्याप्यभ्युपगन्तव्यत्वात्। न चेश्वरज्ञानस्य स्वातिरिक्तसर्वविषयत्वमिति शङ्कनीयम्। तथा सङ्कोचे कारणाभावात्। 'यः सर्वज्ञः सर्ववित्'[2] इत्यादिश्रुतिव्याकोपापत्तेश्च। अत्रापि सङ्कोचं वदता उन्मत्तवदुपेक्षणीयत्वाच्च। प्रमेयत्वे प्रमेयत्वं वदता त्वया स्वस्य स्वविषयत्वस्याभ्युपगन्तव्यत्वाच्चेति। एवमस्मन्मतविरुद्धं नैयायिकाभिमतप्रक्रियान्तरमपि निरसनीयम्।

एतेन वैशेषिकाभिमतप्रक्रियापि निरस्ता वेदितव्या। तन्मतप्रक्रियाया अपि सकलश्रुतिस्मृतिविरुद्धत्वेन अनादरणीयत्वात्।

तथा च स्मृतिः —

काणादशाक्यपाषण्डैस्त्रयीधर्मो विलोपितः।
त्रिदण्डधारणापूर्वं विष्णुना रक्षिता त्रयी॥

इति। तत्र "धर्मं व्याख्यास्यामः"[3] इति धर्मनिरूपणं प्रतिज्ञाय द्रव्यादिषट्पदार्थनिरूपणं कणादेन कृतम्। तदसङ्गतम्। 'आम्रान् पृष्टः कोविदारानाचष्ट' इतिवत्तथाप्रतिज्ञानिरूपणयोर्व्यधिकरणत्वादत एव धर्मं व्याख्यातुकामस्य षट्पदार्थनिरूपणं "सागरं गन्तुकामस्य हिमवद्गमनोपम"मिति काणादे प्रतिज्ञानिरूपणे परिहसन्ति सन्तः। न च द्रव्यादीनामपि धर्मत्वेनावैयधिकरण्यमिति शङ्क्यम्। 'लोके धर्मिष्ठं प्रजा उपसर्पन्ति चोदना[4]लक्षणोऽर्थो धर्म' इति श्रुतिसूत्राभ्यामलौकिक श्रेयःसाधनस्याग्निहोत्रादेरेव धर्मत्वप्रतिपादनेन द्रव्यादीनामतथात्वात्।

1. बृ. ६ अ-३ ब्रा. ९ मन्त्रः ॥
2. मुण्डकोपनिषत् खण्ड-१, मं. ७ ॥
3. धर्मं व्याख्यास्यामः इति सूत्रम् ॥ (कणादसूत्रम्)
4. जै. सू. प्र. अ. प्र. पा. अधि. २, सू. २ ॥

यद्यपि गुणादीनां द्रव्यधर्मत्वमभ्युपगतम् । तथापि धर्मशब्देन तेषामत्रग्रहणं न युक्तम् । प्रतिज्ञाया न्यूनविषयत्वतादवस्थ्यात् । न च धर्मशब्दे लक्षणामङ्गीकृत्य प्रतिज्ञायाः सर्वविषयत्वमिति शङ्क्यम् । तथा कल्पनायां प्रमाणाभावात् । अन्यथोन्मत्तवाक्यमपि लक्षणा-कल्पनद्वारा प्रमाणं स्यात् । न चास्याप्तवाक्यतयोन्मत्तवाक्यवैलक्षण्य-मिति वाच्यम् । "कणादशाक्यपाषण्डैस्त्रयीधर्मो विलोपितः" इत्युदा-हृतस्मृत्या कणादस्यानाप्तत्वावेदनादिति यत्किञ्चिदेतत् ।

किं च द्रव्याणि न वेत्यनुपपन्नम् । प्रकृतिमहदहङ्कारादेरन्धकारस्य वर्णात्मकशब्दादेश्च द्रव्यान्तरस्य सत्त्वात् । न च प्रकृतिमहदहङ्कारादयो न सन्तीति युक्तम् । श्रुतिस्मृतिपुराणादिषु तेषामुपलम्भात् । न च तेषां पृथिव्यादिष्वन्तर्भावः । तद्भिन्नतया श्रुतिस्मृत्यादिषु प्रतिपाद्य-मानत्वात् । अन्यथा पृथिव्याद्यपलापप्रसङ्गात् । न चान्धकारस्य प्रौढप्रकाशकयावत्तेजःसंसर्गाभावरूपत्वेन द्रव्यत्वमेव नेति युक्तम् । पृथिव्यादेरिव रूपवत्त्वक्रियावत्त्वपरिमाणवत्त्वादिना तत्रापि द्रव्यत्वस्य दुर्वारत्वात् । न च तत्र रूपवत्त्वादिप्रतीतिः भ्रमः । बाधकाभावात् । बाधकाभावेऽपि भ्रमत्वाङ्गीकारे पृथिव्यादावपि रूपवत्त्वादिप्रतीतेर्भ्रमत्वे-नाद्रव्यत्वं स्यात् । न चोभयसिद्धालोकाभावेनैवान्धकारप्रतीतिव्यव-हारयोरुपपत्तौ न तस्य द्रव्यान्तरत्वं कल्पनीयं गौरवादिति वाच्यम् । अनन्यथासिद्धस्य रूपवत्त्वादेर्द्रव्यत्वसाधकस्य विद्यमानत्वेन गौरवस्य प्रामाणिकत्वात् । अन्यथा त्वन्मते आकाशादिद्रव्यान्तरं न सिद्ध्येत् । तत्राप्यावरणाभावरूपत्वेनान्यथासिद्धेर्वक्तुं शक्यत्वात् । न च शब्द-लक्षणगुणस्यान्यत्रासम्भवेनातिरिक्ताकाशद्रव्यसिद्धिरिति शङ्क्यम् । तथासत्यत्राप्यपाकजनीलरूपस्यान्यत्रासम्भवेनान्धकाराख्यद्रव्यसिद्धेर्दु-र्वारत्वात् । वस्तुतस्तु ध्वन्यात्मकशब्दस्य नाकाशमात्रगुणत्वं किं तु पञ्चभूतगुणत्वमिति न भवदभिमतपरिशेषसिद्धिः ।

किं चान्धकारस्यालोकाभावरूपत्वं कथमभ्युपगम्यते । तदभाव-स्थले एव तत्प्रतीतेरिति चेन्न । आकाशस्याप्यावरणाभावरूपस्यापातत:

उक्तत्वात् । आलोकस्याप्यन्धकाराभावस्वरूपत्वापाताच्च । 'तमश्छिच्छेद भगवानि'त्यादिस्मृत्यान्धकारस्य छेद्यत्वादिप्रतिपादनेन द्रव्यत्वस्य दुर्वारत्वाच्च । न च वर्णात्मकशब्दस्याप्याकाशादिगुणत्वेन द्रव्यत्वं नेति युक्तम् । 'यावद्ब्रह्म[1] विष्ठितं तावती वागि'ति ब्रह्मवत् विभुद्रव्यत्वावेदनात् । 'वाचा[2] विरूप नित्यया' इति तन्नित्यत्वावेदनाच्च । न चोत्पन्नो गकारो विनष्टो गकार इति वर्णात्मकशब्दस्योत्पत्तिविनाशानुभवेन कथं नित्यविभुद्रव्यत्वमितिं युक्तम् । उत्पत्तिविनाशयोर्व्यञ्जकवायुगतत्वेन वर्णगतत्वासिद्धेः । न च विनिगमनाविरहः । तन्नित्यत्वस्य प्रमाणसिद्धत्वात् । 'स एवायं गकारः' इति प्रत्यभिज्ञायाः सार्वजनीनत्वाच्च । न च नित्यत्वं गौणम् । प्रत्यभिज्ञा सजातीयविषयिणीति युक्तम् । बाधके सत्येव नित्यत्वस्य गौणनित्यत्वरूपतायाः प्रत्यभिज्ञायाश्च जातिविषयत्वस्य चाङ्गीकर्तव्यत्वात् । न हि प्रकृते शब्दनित्यत्वस्य मुख्यत्वे प्रत्यभिज्ञाया व्यक्तिविषयत्वे च बाधकमस्ति । उत्पत्तिविनाशप्रतीतिश्च व्यञ्जकविषयिणीति युक्तम् ॥

किं चेन्द्रियाणां भौतिकत्वोक्तिरसङ्गता । तैजसानीन्द्रिया[3]ण्याहुरिति तेषां तैजसाहङ्कारकार्यत्वावेदनात् । न च रूपादिषु पञ्चसु मध्ये यदिन्द्रियं यदिन्द्रियगुणं गृह्णाति तदिन्द्रियं तद्गुणयुक्तमिति व्याप्तिबलादिन्द्रियाणां भौतिकत्वं सिद्ध्यतीति युक्तम् । सर्वेष्वपीन्द्रियेषु भौतिकत्वाहङ्कारिकत्वविवादे व्याप्तेरेवाभावेनानुमानप्रवृत्त्ययोगात् । रूपादिषु पञ्चसु मध्ये इत्यादिविशेषणविवक्षायाः कुसृष्टियुक्तत्वेन तत्सिध्यर्थमागमस्यैवानुसरणीयतया धर्मिग्राहकमानेनाऽऽहङ्कारिकत्वस्यैव सिद्धेश्च ।

किं च श्रोत्रेन्द्रियस्याकाशात्मत्वमसङ्गतम् । श्रोत्रेन्द्रियस्यापि चक्षुरादेरिवोत्पत्यादेः श्रवणात् । एवं वागादिकर्मेन्द्रियपञ्चक-

---

1. ऋ. मं. १०, सू. ११४, मं. ८ ॥
2. ऋग्वेदे मं. ८, सू. ७५, मं. ६ ॥
3. भागवतम् ।

मप्यङ्गीकार्यम् । इन्द्रियाणि दशैकं[1] चेत्यादि स्मृत्या वागादीनामपि इन्द्रियत्वसिद्धेः । एवमाकाशस्य मनसश्च नित्यत्वं नाङ्गीकार्यम् । तयोरपि सृष्टिप्रकरणेषूत्पत्तिविनाश[2]योरावेदनात् । न हि श्रुतिविरोधेऽनुमानं मानं भवति । अन्यथा श्रुत्यर्थः सर्वोऽपि दत्तजलाञ्जलिः स्यात् । न च तद्युक्तम् । वैदिकेन श्रुत्यर्थस्य सर्वस्यानुसरणीयत्वात् । न च तत्र श्रुतेरतात्पर्यम् । तत्र हेत्वनुपन्यासात् । निष्कारणमेव तत्र तात्पर्यानभ्युपगमे अतिप्रसङ्ग इति उक्तम् ।

किं च तदभिमताखण्डकालेऽपि न प्रमाणम् । भूतभविष्यद्वर्तमानकालातिरेकेण कालान्तरस्याभावात् । यथा चैतत्तथाऽग्रे वक्ष्यते ।

किं च जीवात्मनो विभुत्वमपि नाङ्गीकार्यम् । तत्र प्रमाणाभावात् । प्रत्युत 'बालाग्रशतभागस्ये'[3]त्यादिश्रुत्या तस्याणुत्वेनैव सिद्धेः । न चैषोऽणु[4]रात्मा चेतसा वेदितव्यः अणोरणीयानित्यादिपरविषयाणुत्व श्रुतीनामिव 'बालाग्रे'त्यादेरपि सौक्ष्म्याभिप्रायत्वमेव नत्वणुपरिमाणप्रतिपादनपरत्वमिति वाच्यम् । 'महतो[4] महीयान्' 'महान्तं[5] विभुमात्मानम्' इत्यादिश्रुतिभिः परमात्मनः सर्वव्यापकत्वप्रतिपादनेन तत्राणुत्वप्रतिपादकश्रुतीनां सौक्ष्म्याभिप्रायत्वकल्पनेऽपि जीवात्मनि विशिष्यव्यापकत्वप्रतिपादकश्रुतिस्मृत्याद्यदर्शनेन 'बलाग्रे'त्यादेर्यथा श्रुतार्थपरत्वस्यैव न्याय्यत्वात् । न च 'नित्यः सर्वगतः[6] स्थाणु'रिति स्मृत्या तस्य सर्वगतत्वसिद्धिः । 'अग्नि[7]र्यथैको भुवनं प्रविष्टः' इत्यादावग्नेः

1. गी. अ. १३, श्लो. ८ ॥
2. तै. श्रु. ब्रं. वल्ली ॥
3. श्वेताश्वतरोपनिषदि अध्या. ८, मं. ९ ॥
4. श्वेताश्व. अ. ३, मं. २० ॥
5. कठ अ. १, वल्ली १, मं. २२ ॥
6. गीः अ. २, श्लो. २४ ॥
7. कठ अ. २, वल्ली २, मं. ९ ॥

सर्वगतत्ववत् सर्वजीवापेक्षया तत्र सर्वगतत्वोपपत्तेः अन्यत्वप्रतिपादक-श्रुत्यनुसारेण सर्वगतस्थश्चासावणुश्चेति स्मृत्यर्थस्य वर्णनीयत्वेन विरोधाभावाच्च। न चाग्नेरूर्ध्वज्वलनं वायोस्तिर्यक् पवनमणुमनसश्चाद्यं कर्मादृष्टकारितमित्यभ्युपगन्तव्यम् (वै. सू.                    )। अदृष्टं चात्मगुणः एवं सर्वत्रादृष्टस्यावश्यकत्वात्। गुणस्य च गुणिनं विनाऽव-स्थानानुपपत्तेर्जीवस्य विभुत्वमङ्गीकरणीयमिति वाच्यम्। व्यतिरेको-गन्धवदित्यादिन्यायेनादृष्टस्य गुणस्य[1] गुणिनं विनाऽप्यवस्थानोपपत्तेः। कार्यकारणभावादिसंबन्धान्तरेणाणुपरिमाणजीवनिष्ठादृष्टगुणस्य सर्व-देशसंबन्धोपपत्तेश्च। अदृष्टस्यात्मगुणत्वे प्रमाणाभावाच्चेति यत्किञ्चि-देतत्।

किं चास्माभिर्द्रव्याणां गुणक्रियादीनां चाभेदाभ्युपगमेन त्वदीयो विभागो न युज्यते।

किं च त्वदभिमता जातिरपि नाङ्गीकार्या। घटत्वादीनां सकल-घटादिव्यक्तिनिष्ठत्वे नित्यत्वे च प्रमाणाभावात् घटत्वादीनां प्रतिव्यक्ति-भिन्नत्वादनित्यत्वाच्च। न चैवमनुगतप्रतीत्यनुपपत्तिः। त्वन्मते घटत्व-पटत्वादिजातिष्वनुगतप्रतीतिवत् सादृश्यात् घटोऽयं पटोऽयमित्यनु-गतप्रतीत्युपपत्तेः।

किं च नित्यद्रव्यवृत्तयोऽन्त्या विशेषा इत्यङ्गीकारोऽनुपपन्नः। "भेदहीनेत्वपर्यायशब्दान्तरनियामकः। विशेषो नाम कथितः सोऽस्ति वस्तुष्वशेषतः" (अनुव्याख्याने) इत्यस्मदभिमतविशेषातिरेकेण नित्य-द्रव्यमात्रवृत्तिविशेषसद्भावे प्रमाणाभावात्। विशेषनियामकाभावेन तादृशविशेषाणामनित्यद्रव्येष्वप्यङ्गीकार्यत्वाच्च। तत्र व्यावर्तकान्तर-सत्त्वेन विशेषानभ्युपगमे च नित्यद्रव्येष्वपि व्यावर्तकान्तरसत्त्वेन तेषामनङ्गीकर्तव्यत्वात्।

किं च समवायश्चानभ्युपगन्तव्यः। स्वरूपसम्बन्धेनैव रूपादि-वैशिष्ट्यप्रतीतेरुपपादनीयत्वात्। समवायवैशिष्ट्यप्रतीतेस्त्वया स्वरूप-

1. ब्र. सू. अ. २, पा. ३, अधि. १३, सू. २७ ॥

सम्बन्धविषयत्वोपगमात् । न चैवं संयोगस्याप्यसिध्यापातः । अन्यतरकर्मादिजन्यसंयोगस्य प्रत्यक्षसिद्धत्वेन दुरपह्नवत्वात् । न चेह तन्तुषु पटसमवाय इति समवायोऽपि प्रत्यक्षत एवानुभूयत इति न तदपलापः कर्तुं शक्यते इति युक्तम् । तथाविधप्रतीतेरेवाऽसिद्धेः । कल्पितप्रतीतिमात्रेण वस्तुसिध्यङ्गीकारेऽतिप्रसङ्गात् । प्रत्युत तन्तव एव पट इति तन्तुपटादीनामभेदानुभवाच्च । अस्तु वा घटादीनां रूपादीनां च कश्चन सम्बन्धः । तथाऽपि स एको नित्यश्चेत्यत्र प्रमाणाभावः । न च धर्मिग्राहकमानेन सिध्यन् समवायरूपसम्बन्धो लाघवान्नित्य एव सिध्यतीति वाच्यम् । प्रतिव्यक्तिभिन्नभिन्नतया आगन्तुकत्वेन चानुभूयमानस्य तथाविधसम्बन्धस्यानेकत्वविनाशित्वयोरभ्युपगन्तव्यत्वात् । एवं संसर्गाभावस्यातिरिक्तस्य सत्वेऽप्यतिरिक्तान्योन्याभावो नाभ्युपेयः । सर्वत्र त्वदङ्गीकृतस्वरूपभेदेनैव भिन्नत्वव्यवहारोपपत्तेः । अन्यथा वैरूप्याश्रयणापातादित्यन्यत्र विस्तरः ।

तस्मान्नैयायिकमतं वैशेषिकमतं च न प्रेक्षावदुपादेयम् ।

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां श्रीमत्सुरेन्द्रतीर्थपूज्यपादानां शिष्येण सर्वतन्त्रस्वतन्त्रेण विजयीन्द्रभिक्षुणा विरचिते सर्वसिद्धान्तसारासारविवेचने नैयायिकवैशेषिकमतभङ्गो नाम षष्ठः परिच्छेदः ॥

# ॥ अथ कौमारिलवैयाकरणमतभङ्गः ॥

इदानीं कौमारिलादिमतं निराक्रियते ।

इत्थं हि कौमारिलप्रक्रिया । वेदस्तावत्प्रमाणम् । स च विध्यर्थवादमन्त्रनामधेयभेदभिन्नो धर्ममेव प्रतिपादयति । तत्र विधीनां साक्षाद्धर्मप्रतिपादकत्वम् । अर्थवादानामनुष्ठेयार्थस्मारकत्वेनोपयोगः । नामधेयानां धात्वर्थावच्छेदकत्वेनेति विवेकः । एवं च सर्वस्यापि वेदस्य धर्मप्रमाणतया धर्मातिरिक्तमीश्वरादिकं न वेदतात्पर्यविषयः — इति । ईश्वरोऽपि नाङ्गीकार्यः । सृष्टिप्रलयावपि नाङ्गीकार्यौ । देहविशेषविशिष्टाश्चेतनारूपा इंद्रादिदेवा अपि नाङ्गीकार्याः । न च वेदान्तैरीश्वरसिद्धिः सृष्टिप्रलयादिसिद्धिश्चेति वाच्यम् । वेदान्तानामूषरप्रायत्वेन केवलादृष्टार्थत्वोपपत्तेः । यद्वा कर्मकर्ता जीवात्मैव वेदान्तैर्ज्ञातव्य इत्युपदिश्यते । आत्मज्ञानं च कर्तुसंस्कारः । एवं चैतावदरे खल्वमृतत्वमित्यादिफलश्रुतिरर्थवादः । तथा च पारमर्षं सूत्रम् । 'द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यादि'ति (जै. सू. अ. ४, पा. ३–अधि. १, सू. १) । मोक्षश्च निष्कामकृतकर्मभ्य एव भवति । कर्मणां मोक्षसाधनत्वनिषेधश्च सकामकृतकर्मविषयः । न च निष्कामकृतकर्मणां मोक्षसाधनत्वे सकामकृतकर्मणां च बन्धहेतुत्वे प्रमाणाभावः । 'कर्मणा मृत्युमृषयो निषेदुः । प्रजावन्तो द्रविणमिच्छमानाः' अथापरे ऋषयो मनीषिणः परं कर्मभ्योऽमृतत्वमानशुः । 'न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः' इत्यादिश्रुतीनां (कैवल्योपनिषत् खं. १, मं. ३) सत्वात् । अत्र प्रजावन्तो द्रविणमिच्छमाना ऋषयः कर्मणा मृत्युं निषेदुरिति सकामकृतकर्मणां मृत्युशब्दितबन्धहेतुत्वोक्त्या मनीषिणोऽपरे ऋषयः कर्मभ्यः परममृतत्वमानशुः इत्यमृतत्वसाधनतयोक्तानां कर्मणां निष्कामकृतत्वलाभात् । 'त्यागेनेत्यत्रापि फलाभिसन्धित्यागमात्रस्य विवक्षितत्वाच्च । न च श्रुतिद्वयेऽपि कर्मविशेषसाध्यतया प्रतिपाद्यमानममृतत्वं आभूतसंप्लवं स्थानममृतत्वं हि भण्यते" इत्युक्त गौणामृतत्वमिति शङ्क्यम् । त्वन्मतेऽपि एतावदरे खल्वमृतत्वमित्यादौ

प्रतिपाद्यमानममृतत्वमपि तथाविधं स्यादिति वक्तुं शक्यत्वात्। परममृतत्वमिति मुख्यत्वरूपपरत्वविशेषणेन तस्य मोक्षरूपत्वावश्यं भावाच्च। तस्माद्वेदान्तानां कर्मकर्तुस्तावकत्वात्, कर्मणामेव मोक्ष-साधनत्वात् ईश्वरसृष्टिप्रलयक्रिया नाङ्गीकार्या इति। तत्र ब्रूमः ईश्वरः किमिति नाङ्गीक्रियते। किं साधकाभावात्। किं वा बाधकसत्वात्। नाद्यः। भिन्नप्रकरणस्थानां वेदान्तानामेव तत्साधकत्वात्। न च वेदान्तानामूषरप्रायत्वमिति शङ्क्यम्। वेदमात्रस्य तथात्वापातात्। वैदिकेन सर्ववेदानामर्थवत्वेनैव प्रामाण्यस्याङ्गीकार्यत्वात्। न च वेदांतानां भिन्नप्रकरणस्थत्वेऽपि कर्मकर्तुभूतजीवात्मप्रतिपादकत्वमिति वाच्यम्। 'यतो वे'त्यादीनां जीवात्मप्रतिपादकत्वाभावेन तदतिरिक्त-परमात्मप्रतिपादकत्वस्यावश्यकत्वात्। न च यतो वेत्यादीनां कर्मकर्तृभूत-जीवात्मस्तावकत्वमिति शङ्क्यम्। सर्वेष्वपि वेदान्तेषु जीवातिरिक्तस्य परमात्मन एव जगत्कारणत्वादिधर्माणामावेदितत्वादनेन तेषां तत्साध-कत्वायोगात्। न ह्यन्यस्य प्रतिपादनमन्यस्य स्तुतिर्भवति। न च 'अयमात्मा ब्रह्म'[1] 'तत्वमसि'[2] इत्यादिना जीवपरैक्यप्रतिपादनान्नस्तुते-रन्यनिष्ठत्वमिति वाच्यम्। तत्वमस्यादीनामपि त्वद्रीत्या स्तुतिपरत्वेन तस्य जीवपरैक्यसाधकत्वायोगात्। प्रत्यक्षादिप्रमाणान्तरानुसारेण तत्वमस्यादिवाक्यार्थस्यानुसरणीयत्वात्। जडब्रह्मैक्यप्रतिपादनवत् जीवपरैक्यप्रतिपादनस्याप्यर्थान्तरपरत्वावश्यम्भावाच्च। तस्माद्वेदान्ते जीवातिरिक्तपरमात्मसिद्धिर्दुर्वारा। न द्वितीयः। वेदान्तैर्जीवातिरिक्त-ब्रह्मसिद्धौ बाधकाभावात्।

किं च वेदान्ते जीवातिरिक्तब्रह्मसिद्धौ किं बाधकम्। न तावद्वेद-मात्रस्य क्रियापरत्वं तत् बाधकम्। स्वर्गादीनामप्यसिध्यापातात्। तेषामक्रियारूपत्वात्। न च स्वर्गादीनामक्रियारूपत्वेऽपि क्रियाफल-प्रतिपादकत्वेन क्रियार्थत्वम्। क्रियास्वरूपसाधनफलेष्वन्यतमप्रतिपादक-स्यापि क्रियाप्रतिपादकत्वात्। ब्रह्मणश्चोक्तेष्वन्यतमत्वाभावादिति

---

1. बृ. उ. अ. ४, ब्रा. ४, मं. ८ ॥ 2. छां. ६-८-७ ॥

वाच्यम् । लोके सिद्धपरवाक्यानामपि बोधकत्वदर्शनेन तन्न्यायेन वेदान्तानां सिद्धब्रह्मप्रतिपादकत्वेऽपि प्रामाण्यस्य दुर्वारत्वात् । कर्मफलप्रदत्वेन सकलकर्मसमाराध्यत्वेन च वेदान्तैर्ब्रह्मसिध्युपपत्तेश्च । न च तस्य तत्र प्रमाणाभावः । 'एषह्येव साधु कर्म कारयति' (कौ. ३-८), 'तं यमेभ्यो लोकेभ्य उन्निनीषते', 'इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति' 'भुवनस्य नाभिः' 'भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्' फलमत उपपत्ते(ब्र. सू. अ. ३, पा. २, सू. ३९)रित्यादि श्रुतिस्मृति सूत्राणां सत्वात् । न च तेषामन्यपरत्वम् । यथाश्रुतार्थपरत्वे बाधकाभावात् । तस्माद्वेदानां क्रियापरत्वेऽपि वेदान्तानां सकलकर्मसमाराध्यब्रह्मप्रतिपादकत्वं दुर्वारमिति न तत् ब्रह्मसिद्धौ बाधकम् ।

नापि सृष्टिप्रलयाद्यभाव एव ईश्वरसिद्धौ बाधकः । सृष्टिप्रलययोः सर्ववेदान्तेषु प्रतिपादनेन तदसिद्धेः । सृष्टिप्रलययोरीश्वरसिध्यधीनत्वेनान्योन्याश्रय इति चेत् । भ्रान्तोऽसि । न हि वयं सृष्टिप्रलयौ ईश्वरं च कल्पयामः । येनान्योन्याश्रयः स्यात् । किन्तु श्रुतिस्मृतिभिस्तदुभयसिद्धिं ब्रूमः इति ॥

किञ्च "किमीश्वरः स्वार्थं जगत्सृजति परार्थं वा"। नाद्यः । तस्य आप्तकामत्वाभ्युपगमात् । न द्वितीयः । वैषम्यनैर्घृण्यप्रसंगादित्यादिकं तु न बाधकम् । लोकवत्तु लीलाकैवल्य (ब्र. सू. २-१-३४) मित्यादिनैव सूत्रकृताऽस्य बाधकस्य परिहृतत्वात् । बाधकान्तरं च ब्रह्ममीमांसायामेव द्वितीयाध्याये विस्तरेण प्रतिक्षिप्तमिति नेह प्रपंच्यते । तस्मादीश्वरसिद्धौ न किमपि बाधकम् ॥

किञ्च मोक्षसाधनीभूतज्ञानविषयत्वेन ब्रह्मसिद्धिः । न च ज्ञानान्न मोक्षः । किन्तु कर्मभ्य एव स इति वाच्यम् । 'ब्रह्मविदाप्नोति परम्' (तै. उ.) 'तमेवं विद्वानमृत इह भवति' (पुरुषसूक्तम्) इत्यादिबहुश्रुतिविरोधापातात् ॥

'न कर्मणा न प्रजया धनेन' (कैवल्योपनिषत् खं. १, मं. ३) इत्यादौ कर्मणां मोक्षसाधनत्वस्य कण्ठत एव निषेधात् । मोक्षसाधनीभूतज्ञानार्थतया कर्मणां मोक्षसाधनत्वोक्त्युपपत्तेश्च । तथा च श्रुतिः ।

'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषंति यज्ञेन दानेन तपसाऽनाशकेन' "विद्यां चाविद्यां च यस्तद्वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ।" (ईषावास्योपनिषदि मन्त्र ११) इत्याद्या ॥

न च ब्रह्मज्ञानस्यैव कर्मार्थत्वमिति वैपरीत्यं शङ्क्यम् । मोक्षसाधनत्वेनाभिमतस्य ब्रह्मसाक्षात्कारस्य कर्मार्थत्वे प्रमाणाभावात् । कर्मणां ब्रह्मज्ञानार्थत्वे श्रुत्यादिप्रमाणस्योदाहृतत्वाच्चेति यत्किञ्चिदेतत् ॥

तस्मान्निरीश्वरवादः सर्वात्मना त्याज्यः । जगदनीश्वरमिति वदतामासुरप्रकृतित्वेन तेषामसंभाष्यत्वात् । तथा च भगवद्वचनम् । असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम् ' इति । (गीता अ. १६, श्लो. ८)

एवं वेदान्तविरुद्धं कौमारिलप्रक्रियान्तरमपि निरसनीयम् ॥

एतेन जगतः शब्दविवर्तत्वमभ्युपगच्छतां वैयाकरणानां मतमपि निरस्तं वेदितव्यम् । शब्दस्य जगत्कारणत्वे प्रमाणाभावात् । सच्चिदानन्दादिरूपं ब्रह्म हि वेदान्तेषु जगत्कारणत्वेनावेद्यते । शब्दस्य तथात्वाभ्युपगमे नाममात्रे विवादपर्यवसानात् । वर्णानां वेदानां च नित्यविभुत्वाभ्युपगमेऽपि जगदुपादानत्वायोगाच्च । प्रकृतेरेव जगदुपादानत्वावश्यम्भावाच्च । प्रकृतेश्च प्रत्यक्षसिद्धशब्दभिन्नत्वावश्यम्भावाच्च । न च स्फोटाख्यशब्दविशेषस्यैव जगदुपादानत्वमङ्गीक्रियते इति वाच्यम् । श्रूयमाणशब्दव्यतिरेकेण स्फोटसद्भावे प्रमाणाभावात् श्रूयमाणशब्दानामेव नित्यत्वाभ्युपगमेन तैरेवार्थप्रतीत्युपपत्तौ तदर्थतया स्फोटस्यानङ्गीकार्यत्वाच्च । व्याकरणसूत्रेषु स्फोटाख्यशब्दाङ्गीकारस्य क्वाप्यदर्शनेन व्याख्यातॄणां तदङ्गीकारस्याज्ञानप्रयुक्तत्वावश्यम्भावेन प्रेक्षावदनुपादेयत्वाच्च ।

किञ्च स्फोटसद्भावेऽपि तस्य जगदुपादानत्वे प्रमाणाभावः । न तावत्तस्य प्रत्यक्षेण जगदुपादानत्वसिद्धिः । जगतः शब्दप्रभवत्वेनादर्शनात् । तस्याप्रत्यक्षत्वोपगमाच्च । नाप्यनुमानेन तत्सिद्धिः । स्फोटे जगदुपादानत्वसाधकस्य लिङ्गस्यादर्शनात् । न चागमेन तत्सिद्धिः । 'द्यावा भूमी जनयन् देव एकः' इत्याद्यागमेन परमात्मनो जगत्कर्तृत्वस्य,

मायां तु प्रकृतिं विद्यात्' (श्वेताश्व. ४, अ. मं. १०) इत्याद्यागमेन माया-शब्दितस्य जगदुपादानत्वस्य च प्रतिपादनात्। त्वभिमतस्फोटाख्य-शब्दस्य तथात्वप्रतिपादकागमस्यादर्शनाच्च। न च 'माया' 'प्रकृत्या'दि-शब्देन स्फोटाख्यशब्द एवोच्यत इति वाच्यम्। प्रमाणाभावात्। वैपरीत्यापत्तेश्च। नाममात्रविवादापत्तेश्च। नाप्यनुपपत्त्या तत्सिद्धिः। स्फोटस्य जगदुपादानत्वाभावे अनुपपद्यमानार्थस्यादर्शनात्। जगतः प्रकृत्युपादानत्वेनाप्युपपत्तेश्च। अर्थप्रतीतेश्च नित्यशब्दकार्यत्वोपगमेन तदनुपपत्त्यभावाच्चेति यत्किञ्चिदेतत्।

तस्मात् वैयाकरणमतमपि प्रेक्षावदनुपादेयमिति सिद्धम्।

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां श्रीमत्सुरेन्द्रतीर्थपूज्यपादानां शिष्येण सर्वतन्त्रस्वतन्त्रेण विजयीन्द्रभिक्षुणा विरचिते सर्वसिद्धान्त-सारासारविवेचने कौमारिलवैयाकरणमतभङ्गो नाम सप्तमः परिच्छेदः॥

## ॥ अथ शङ्करमतभङ्गः ॥

इदानीं शङ्करमतं निराक्रियते ।

इत्थं हि तन्मतप्रक्रिया । अध्यारोपापवादन्यायेन वियदादिसृष्ट्यादिप्रतिपादकत्वेन वेदान्तानां प्रवृत्तिः । तत्र असर्पभूतरज्जौ सर्पारोपवत् वस्तुन्यवस्त्वारोपोऽध्यारोपः । वस्तु च सच्चिदानन्दरूपमद्वितीयं ब्रह्म,अज्ञानं च सदसद्भ्यामनिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधिभावरूपम् । 'अहमज्ञः' इत्यनुभवात् "देवात्मशक्तिं स्वगुणैर्निगूढाम्" (श्वे. अ. १, मं. ३) इत्यादिश्रुतेश्च । इदमज्ञानं समष्टिव्यष्ट्यभिप्रायेण एकमनेकमिति चोच्यते । अजामेकामित्यादिश्रुतेः (श्वे. अ. ४, मं ५), 'इन्द्रो मायाभि'रित्यादिश्रुतेश्च । इयं समष्टिरुत्कृष्टोपाधितया शुद्धसत्वप्रधाना । तदुपहितं चैतन्यं सर्वज्ञत्वसर्वैश्वर्यत्वसर्वनियन्तृत्वादिगुणकमव्यक्तमन्तर्यामी जगत्कारणमीश्वर इति व्यपदिश्यते । 'यः सर्वज्ञः सर्ववित्' (मुं. खं. १, मं. ९) इत्यादिश्रुतेः । व्यष्टिस्तु निकृष्टोपाधितया मलिनसत्वप्रधाना । एतदुपहितचैतन्यमल्पज्ञत्वनिरीश्वरत्वादिगुणकः प्राज्ञ इत्युच्यते ।

अस्याज्ञानस्यावरणविक्षेपनामकं शक्तिद्वयमस्ति ॥

आवरणशक्तिस्तावत् यथाल्पेऽपि मेघेऽनेकयोजनमायतमादित्यमण्डलमवलोकयितृनयनपिधायकतयाऽऽच्छादयतीव तथा अज्ञानं परिच्छिन्नमपि स्वीयया शक्त्याऽऽत्मानमपरिच्छिन्नं अवलोकयितृबुद्धिविधायकतयाऽऽच्छादयतीव । तादृशं सामर्थ्यं विक्षेपशक्तिस्तु यथा रज्ज्वज्ञानं स्वावृतरज्जौ स्वशक्त्या सर्पादिकमुद्भावयति । तथाऽज्ञानमपि स्वावृतात्मनि स्वीयया शक्त्या आकाशादिप्रपञ्चमुद्भावयति । तादृशं सामर्थ्यं एवंविधशक्तिद्वयवदज्ञानोपहितचैतन्यं स्वप्रधानतया निमित्तं स्वोपाधिप्रधानतया उपादानं च भवति । यथा लूता तन्तुकार्यं प्रति स्वप्रधानतया निमित्तं स्वशरीरप्रधानतयोपादानं च तद्वत् । तमःप्रधानविक्षेपशक्तिमदज्ञानोपबृंहितचैतन्यादाकाशं आकाशाद्वायुः वायोरग्निः

अग्नेरापः अद्भ्यः पृथिवी चोत्पद्यते । 'आत्मन आकाशः संभूतः' (तै. उ. ब्रं. व. अनु. १) इत्यादिश्रुतेः । एतान्येव सूक्ष्मभूतानि चोच्यन्ते । एतेभ्यः सूक्ष्मशरीराणि स्थूलभूतानि चोत्पद्यन्ते । सूक्ष्मशरीराणि सप्तदशावयवकानि लिङ्गशरीराणि । अवयवास्तु ज्ञानेन्द्रियपञ्चकं बुद्धिमनसी कर्मेन्द्रियपञ्चकं प्राणपञ्चकं चेति । तत्र श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानि ज्ञानेन्द्रियाणि आकाशादीनां सात्विकांशेभ्यो व्यस्तेभ्यः पृथक् पृथक् क्रमेणोत्पद्यन्ते । बुद्धिर्नाम निश्चयात्मकान्तःकरणवृत्तिः । मनस्तु संकल्पविकल्पात्मकान्तःकरणवृत्तिः । अनयोरेव चित्ताहङ्कारयोरन्तर्भावः । एतेषामाकाशादिगतसात्विकांशेभ्यो मिलितेभ्य उत्पत्तिः । वाक्पाणिपादपायुगुह्याख्यानां कर्मेन्द्रियाणामाकाशादिगत रजोंशेभ्यो व्यस्तेभ्यः पृथक् पृथक् क्रमेणोत्पत्तिः । प्राणापानव्यानोदानसमानाख्याः पञ्चप्राणाः आकाशादिगतरजोंशेभ्यो मिलितेभ्यो उत्पद्यन्ते। एतत्समष्ट्युपहितं चैतन्यं सूत्रात्मा हिरण्यगर्भः प्राण इति चोच्यते । एतद्व्यष्ट्युपहितं चैतन्यं तेजसो भवति । तेजोमयान्तःकरणोपहितत्वात् । स्थूलभूतानि तु पञ्चीकृतानि । पञ्चीकरणं तु आकाशादिषु पञ्चसु एकैकं द्विधा समं विभज्य तेषु प्राथमिकात् पञ्चभागात् प्रत्येकं चतुर्धा समं विभज्य तेषां चतुर्णां भागानां स्वस्वद्वितीयभागापरित्यागेन भागान्तरेषु संयोजनम्, त्रिवृत्करणश्रुतेः पञ्चीकरणस्याप्युपलक्षणत्वात् पञ्चीकरणानन्तरं आकाशे शब्दोऽभिव्यज्यते । वायौ शब्दस्पर्शौ अग्नौ शब्दस्पर्शरूपाणि अप्सु शब्दस्पर्शरूपरसाः । पृथिव्यां शब्दस्पर्शरूपरसगन्धाः । एवं पञ्चीकृतभूतेभ्यो भूर्भुवःस्वर्महर्जनस्तपःसत्यमित्येतन्नामकानां उपरिविद्यमानानां अतलवितलसुतलरसातलतलातलमहातलपातालनामकानामधो विद्यमानानां लोकानां ब्रह्माण्डस्य जरायुजाण्डज स्वेदजोद्भिज्जाख्यचतुर्विधशरीराणामन्नपानादीनां चोत्पत्तिः । एतत्समष्ट्युपहितं चैतन्यं वैश्वानरो विराडिति चोच्यते । व्यष्ट्युपहितं चैतन्यं विश्व इत्युच्यते । एतत्स्थूलशरीरमन्नविकारत्वात् अन्नमयकोशो भवति । कोशवदाच्छादकत्वात् । सूक्ष्मशरीरं तु प्राणमयो मनोमयो विज्ञानमय इति कोशत्रयात्मकं भवति । तत्र प्राणादिपञ्चकं

कर्मेन्द्रियैः सहितं सत्प्राणमयकोशो भवति। क्रियाशक्तिमान् कार्यरूपः प्राणमयः। इच्छाशक्तिमान् कारणरूपो मनोमय विज्ञानमयः इति तेषां भेदः। अज्ञानरूपोपाधिस्तु आनन्दमयकोशः। एवं स्थूलसूक्ष्माविद्यारूपोपाधित्रितयोपहितं चैतन्यमविविक्तं सद्वेदान्तगततत्त्वच्छब्दवाच्यं भवति। विविक्तं सत् लक्ष्यं तुरीयतममिति चोच्यते। 'शिवमद्वैतं चतुर्थं मन्यन्ते' (माण्डूक्ये मं. ७) इत्यादिश्रुतेः। एवं रज्जुविवर्तस्य सर्पस्य रज्जुमात्रत्वोपपादनवत् वस्तुभूतब्रह्मविवर्तस्यावस्तुनो ज्ञानादेरारोपितशब्दार्थस्य प्रपञ्चस्य वस्तुभूतब्रह्ममात्रत्वोपपादनमपवादः। अवस्तुनो वस्तुमात्रत्वोपपादनं च मिथ्यात्वोपपादनमेव। एवमध्यारोपापवादाभ्यां ब्रह्मणो निर्विशेषत्वं प्रत्यक्ब्रह्मैक्यं प्रपञ्चमिथ्यात्वं च सिध्यतीति सर्ववेदान्ततात्पर्यरहस्यम्॥

किञ्च "विमता जीवात्मानः परमात्मनो न भिद्यन्ते। आत्मत्वात् परमात्मवत्।" इत्यनुमानं जीवब्रह्मैक्ये मानम्। न चाप्रयोजकत्वम्। 'तत्त्वमसि' (छां. ६-८-७), 'अयमात्मा ब्रह्म' (बृ. २-५-१९) इत्यादि श्रुत्यप्रामाण्यप्रसङ्गस्य विपक्षबाधकस्य सत्वात्। न च 'त्वं सिंहोऽसि' 'सिंहोऽयं माणवकः' इत्यादेरिव ऐक्यपरत्वाभावेऽपि 'तत्त्वमसि' 'अयमात्मा ब्रह्म' इत्यादेरपि गौणार्थमादाय प्रामाण्यसंभवेन तदप्रामाण्यप्रसंगस्य न विपक्षबाधकतेति वाच्यम्। तत्वमसीति नवकृत्वोऽभ्यस्तवाक्येषु ऐक्यरूपमुख्यार्थमादायैव प्रामाण्यस्य निर्वाह्यत्वात्। न च 'नाहमीश्वरः' 'नाहं देवदत्तः' इत्यादि प्रत्यक्षबाधः। 'जीवपरमात्मानौ परस्परं भिद्येते किञ्चित् ज्ञत्व सर्वज्ञत्वादि विरुद्धधर्माधिकरणत्वात्। दहनतुहिनवदिति सत्प्रतिपक्षत्वं चेति वाच्यम्। प्रत्यक्षादेरौपाधिकभेदविषयत्वेन स्वाभाविकैक्यसाधकानुमानबाधकत्वायोगात्। न च जीवब्रह्मभेदस्यौपाधिकत्वे मानाभावः। "एक एव तु भूतात्मा भूते भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" (ब्रह्मबिन्दूपनिषदि मं. १२) 'यथा ह्ययं ज्योतिरात्मा विवस्वान् अपो भिन्ना बहुधैकोऽनुगच्छन्नुपाधिना क्रियते भेदरूपो देवक्षेत्रेष्वेवमजोयमात्मा' 'आकाशमेकं हि यथा घटादिषु पृथग्भवेत् तथैवात्माप्यनेकस्थो

जलाधारेष्विवांशुमान्।' 'विभेदजनके ज्ञाने नाशमात्यन्तिकं गते। आत्मनो ब्रह्मणो भेदं असन्तं कः करिष्यति' (विष्णु पु. २ अं. १३, अ. ७९ श्लो.) इत्यादिश्रुतिस्मृतीनां सत्वात्। अत एव नान्योऽतोऽस्ति॥ न ह्यस्ति द्वैतसिद्धिः। आत्मैव सिद्धोऽद्वितीयो मायया ह्यन्यदिव नात्र काचन भिदास्ति नैवात्र काचन भिदास्ति। अत्र भिदामिव मन्वानः शतधा सहस्रधा भिन्नो मृत्योः स मृत्युमाप्नोतीत्यादि श्रुतिषु भेदनिषेधो भेदज्ञाननिन्दा चोपपद्यते। न च 'निरञ्जनः परमं साम्यमुपैति' (मुं. ३-१-३) यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति। एवं मुनेर्विजानतः आत्मा भवति गौतम' (कठ. २-१-१५) 'इदं ज्ञानमुपाश्रित्य मम साधर्म्य-मागताः। सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च॥' (भ.गी. अ. १४, श्लो. २) इत्यादिश्रुतिस्मृतिभिः मुक्तावपि भेदप्रतिपादनेन जीवब्रह्मभेद एव पारमार्थिकः। तदभेदव्यपदेशस्तु गौण इति युक्तम्। 'ब्रह्म वेद ब्रह्मैव भवति' (मुं. ३-२-९) 'मां तु योऽव्यभिचारेण भक्तियोगेन सेवते। स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते॥' इत्यादिश्रुतिस्मृतिभिः ब्रह्मीभावस्यैव ज्ञानफलत्वप्रतिपादनेन 'गगनं गगनाकार'मित्यादावपि सादृश्यस्याभेदेऽप्युपपन्नतया तावन्मात्रेण मुक्तौ भेदसिद्ध्ययोगात्। सगुणमुक्तौ भेदस्याङ्गीकारेण मुक्तौ भेदप्रतिपादकश्रुतिस्मृत्यादीनां तद्विषयत्वेन विरोधाभावाच्च। न च ब्रह्मभावस्य नित्यसिद्धतया ज्ञानसाध्यत्वायोगेन तदर्थं श्रवणादावप्रवृत्यापात इति वाच्यम्। दुःखप्रागभावाद्यर्थं प्रायश्चित्तादाविव योगक्षेमसाधारणसाध्यत्वमादाय ब्रह्मीभावोद्देशेन श्रवणादौ प्रवृत्युपपत्तेः। कण्ठगतचामीकरन्यायेन सिद्धस्याप्यसिद्धत्वभ्रान्त्या श्रवणादौ प्रवृत्युपपत्तेश्च। तस्मात् जीव-ब्रह्मैक्यमेव पारमार्थिकं तद्भेदस्तु कल्पित इति 'श्रौतः पन्थाः' इति॥

अत्रोच्यते —

जीवात्मानः परमात्मनो न भिद्यन्ते इत्यत्र जीवात्मशब्देनाहमिति प्रतीयमाना विवक्षिताः किंवा तदनुसंबन्धिचैतन्यमात्रं नाद्यः परेणाह-मिति प्रतीयमानानां अनात्मत्वाभ्युपगमेन तेषां परमात्माभेदसाधने बाधात् स्वरूपासिद्धेश्च। न द्वितीयः अहमिति प्रतीतेः अहङ्कारविषयत्वे

प्रमाणाभावात्। न चात्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः इत्यादिश्रुत्याहमिति प्रतीयमानस्य भोक्तुः चिदचित् संवलनरूपत्वसिद्धिरिति वाच्यम्। तथासत्यन्तःकरणस्यैव आत्मशब्दितदेहस्य चक्षुरादिबाह्येन्द्रियाणां चाहंपदार्थभूतभोक्तृकोटिप्रवेशापातात्। न च देहस्य चक्षुरादीन्द्रियाणां च जीवभोक्तृत्वे सहकारित्वमात्रं मनःशब्दितान्तःकरणस्य तु भोक्तृकोटिप्रवेश इति वाच्यम्। विशेषनियामकाभावे वैरूप्याश्रयणेन श्रुत्यर्थकथनायोगात्। "इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः। मनसस्तु परा बुद्धिः बुद्धेरात्मा महान् परः॥" (कठ अ. १, वल्ली ३, मं. १०)। "आत्मानं रथिनं विद्धि शरीरं रथमेव तु। बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च॥" (कठ अ. १-३-३) इति॥ तत्रैवान्तःकरणबहिर्भावेनैव जीवात्मनः प्रतिपादनाच्च। 'महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च। इन्द्रियाणि दशैकं च पञ्चचेन्द्रियगोचराः॥ इच्छा द्वेषः सुखं दुःखं संघातश्चेतनाधृतिः। एतत् क्षेत्रं समासेन सविकारमुदाहृतम्॥" (भ. गी. अ. १३, श्लो. ५, ६, ७)। 'इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते। एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः॥' (भ. गी. अ. १३, श्लो. १) इत्यादिना गीतायां अहङ्कारान्तःकरणबहिर्भावेन क्षेत्रज्ञशब्दितजीवस्य प्रतिपादनाच्च। न च गीतावचनं निष्कृष्टजीवाभिप्रायं अत एवोत्तरत्र क्षेत्रं चापि मां विद्धि इति तस्य स्वाभेदवर्णनमिति वाच्यम्। तस्याद्याप्यसिद्धेः। क्षेत्रज्ञं च 'सर्वक्षेत्रेषु मामपि' 'मां च विद्धि' इत्युपास्योपासकयोरेव तत्र ज्ञेयत्वप्रतिपादनेन क्षेत्रज्ञस्य कृष्णेन स्वाभेदस्याप्रतिपादनाच्च। अन्यथा चशब्दापिशब्दयोः वैयर्थ्यप्रसङ्गात्। नन्वस्तूक्तरीत्या अन्तःकरणाहङ्कारबहिर्भूतो जीवात्मा तस्य पराभेदसाधने को दोषः। जडातिरिक्तोऽहमिति प्रतीयमानो न परस्मात् भिद्यते इत्याद्यनुमाने जडातिरिक्तत्वविशेषणं स्वमते बाधवारणाय सप्रयोजनं परमतेतूपरञ्जकमिति न कश्चिद्दोषः। इति चेत्। किं आत्मत्वं ज्ञातृत्वं वा ज्ञानरूपत्वं वा। नाद्यः। त्वन्मते असिद्धेः कल्पितं तदस्तीति चेन्न। कल्पितेन हेतुना वास्तवसाध्यसिध्ययोगात्। अन्यथा बाष्पादौ कल्पितधूमादिनापि त्वद्रीत्या व्यावहारिकवह्न्यादिसिद्धिप्रसङ्गात्।

न द्वितीयः। वृत्तिरूपज्ञानेष्वनैकान्त्यात्। न चास्मिन् मते वृत्तिज्ञानमेव नेति नोक्तदोषः इति वाच्यम्। जानामीत्यबाधितप्रत्यक्षेण सिद्धज्ञानरूपस्य वृत्तिज्ञानस्य त्वदनभ्युपगममात्रेण ज्ञानरूपत्वासिद्धययोगात्। अन्यथात्मनोऽपि ज्ञानरूपत्वासिद्ध्यापातात्। न चात्मसंबन्धौपाधिकमेव वृत्तेर्ज्ञानरूपत्वं न स्वतः इति वाच्यम्। प्रमाणाभावात्। वैपरीत्यापत्तेश्च। न च सत्यं ज्ञानमनन्तं ब्रह्म। नित्यं विज्ञानमानन्दं ब्रह्मेत्यादिषु ज्ञानत्वविज्ञानत्वयोः ब्रह्मलक्षणत्वोक्तिबलादुक्तार्थसिद्धिरिति वाच्यम्। तत्र विशिष्टस्यैव लक्षणत्वलाभेन ज्ञानत्वमात्रस्य ब्रह्मलक्षणत्वानभ्युपगमात्। ज्ञानशब्दमुख्यार्थत्वसाम्ये वृत्तिः अज्ञप्तिः ब्रह्म तु ज्ञानरूपमित्यत्र विशेषहेत्वभावाच्च। अज्ञानत्वादेः ज्ञानपदाभिधेयत्वेऽपि ज्ञानरूपत्वं नाभ्युपगतमिति तद्वदेव वृत्तेरपि ज्ञानरूपत्वाभाव उपपद्यते इति चेत्। भ्रान्तोऽसि। न हि वयं ज्ञानपदाभिधेयत्वमात्रेण वृत्तेः ज्ञानरूपत्वं ब्रूमः। किन्तु विशेष्यतया तदभिधेयत्वेन तथा ब्रूमः। अस्ति च मम घटविषयकं ज्ञानं वृत्तमिति विशेष्यतया तस्यापि ज्ञानपदाभिधेयत्वम्। एवं च वृत्तिरूपज्ञानेषु व्यभिचारो दुष्परिहरः। किञ्च ईदृग्रूपत्वेन जीवब्रह्माभेदसाधने पदार्थत्वादिना जडब्रह्माभेदसाधनमपि किं न स्यात्। जीवब्रह्मैक्यसाधकानुमानस्य 'तत्त्वमसि' 'अयमात्मा ब्रह्म' (मां. उ. ३-१-२; बृ. उ. ४-५-१९) इत्यादिश्रुतिसाहाय्यमस्तीति चेत्। न। जडब्रह्मैक्यसाधकानुमानस्यापि 'सर्वं खल्विदं ब्रह्म' (छां. ३-१४-१) 'इदं सर्वं यदयमात्मा' (बृ. उ. ४-४-६) इत्यादिश्रुतिसाहाय्यमस्तीति साम्यात् 'सर्वं खल्विदं ब्रह्मे'त्यादिषु (बाधायां) सामानाधिकरण्यं तत्वमसीत्यादौ त्वभेदे सामानाधिकरण्यमिति चेन्न। तथाङ्गीकारे प्रमाणाभावात्। वैपरीत्यापत्तेश्च। ननु जडप्रपञ्चस्य स्वरूपेणोत्पन्नतया विनाशितया चानाद्यनन्तब्रह्माभेदायोग्यतया तत्र बाधायां सामानाधिकरण्यं तत्वमसीत्यादौ त्वभेदे सामानाधिकरण्यं जीवस्य स्वरूपेणोत्पत्ति विनाशयोगित्वे कृतहानाकृताभ्यागमप्रसङ्गेन मोक्षशास्त्राप्रामाण्यप्रसङ्गेन च स्वरूपेणोत्पत्तिविनाशशून्यत्वस्य वक्तव्यतया 'अविनाशी वा अरेऽयमात्मा' (बृ. उ. ४-४-६) 'अजो नित्यः शाश्वतोऽयं पुराणो' 'न हन्यते

हन्यमाने शरीरे' (कठ अ. १-२-१८) इत्यादिश्रुतिसिद्धत्वेन च तस्य ब्रह्माभेदयोग्यत्वात् इति चेन्न। किञ्चित्ज्ञस्य किञ्चिदपि कर्तुमशक्तस्य कर्मवश्यस्य नियम्यस्याधेयस्य सुखदुःखभोक्तुः उपासकस्य जीवस्य, सर्वज्ञेन सर्वशक्त्युपेतेन अकर्मवश्येन सर्वनियन्त्रा सर्वाधारभूतेन सुखदुःखाद्यभोक्त्रोपास्येन ब्रह्मणैक्यासम्भवेन प्रकारान्तरेण सामानाधिकरण्यस्य उपपादनीयत्वात्। सादृश्यादिकमादायापि लोकेऽग्निर्माणवक इत्यादौ सामानाधिकरण्यस्य बहुलमुपलम्भात्। तत्त्वंपदमुख्यार्थयोः ऐक्यस्य त्वयाप्यनभ्युपगमाच्च। न च गौण्यपेक्षया लक्षणा(प्र)वृत्तिः अभ्यर्हितेति वाच्यम्। गौण्या वृत्यन्तरत्वानभ्युपगमात् लक्षणारूपत्वोपगमाच्च। न च केवललक्षणापेक्षया गौणस्थलेऽङ्गीकृताया लक्षणाया लक्षितलक्षणात्वात् जघन्यत्वमिति वाच्यम्। तथापि सादृश्यातिरिक्तसम्बन्धान्तरमादाय लक्षणया सामानाधिकरण्यप्रयोगोपपत्तौ त्वदभिमतार्थपरत्वासिद्धेः। एतेन तत्वमसीत्यादिवाक्याप्रामाण्यप्रसङ्गो विपक्षे बाधक इति निरस्तम्। उक्तरीत्यापि तत्प्रामाण्यस्य उपपादयितुं शक्यत्वात्। न च नवकृत्वोऽभ्यस्ततया तत्वमस्यादौ ऐक्यपरत्वसिद्धिरिति वाच्यम्। त्वं सिंहोऽसि त्वं सिंहोऽसि इति शतकृत्वोऽभ्यासेऽपि तत्रैक्यपरत्वादर्शनात्। 'इदं सर्वं यदयमात्मा' (बृ. उ. ४-४-६) इति जडब्रह्मैक्यस्याप्यभ्यस्तत्वेन ततोऽपि जडब्रह्मैक्यसिद्ध्यापाताच्च। किञ्च जीवः परस्मान्न भिद्यते आत्मत्वादित्यात्यनुमानस्य तत्वमस्यादिश्रुतिवाक्यसाहाय्यं अस्तीत्यनुपपन्नम्। प्रत्यक्षादिविरोधेन तत्वमस्यादिश्रुतेरेव अलब्धात्मकतया 'अन्धस्येवान्धलग्नस्य विनिपातः पदे पदे।' इति न्यायेन तस्यास्तत्सहायत्वायोगात् प्रत्यक्षादेरौपाधिकभेदविषयत्वं उक्तमिति चेत् जीवब्रह्मैक्यस्य किमिदं औपाधिकत्वं न तावत् मुखादिभेदवत् चन्द्रादिभेदवच्च उपाधिजन्यत्वम्। तस्य स्वरूपतोऽनादित्वाभ्युपगमेनाविद्यान्तःकरणरूपोपाधिजन्यत्वायोगात्। नापि तज्ज्ञाप्यत्वम्। प्रदीपादिज्ञाप्यघटपटादिभेदवत्तस्य स्वाभाविकत्वेऽपि उपपन्नत्वात्। नाप्युपाध्यधीनस्थितिकत्वम्। देशकालेश्वराद्यधीनस्थितिकस्य जीवस्वरूपादेः पारमार्थिकत्व-

वदविद्याधीनस्थितिकस्यापि जीवब्रह्मभेदस्य पारमार्थिकत्वोपपत्तेः । नाप्युपाधिनिवृत्तिप्रयुक्तनिवृत्तिप्रतियोगित्वम् । तावता जीवब्रह्मभेदस्य विनाशित्वेन मिथ्यात्वानापत्तेः । मोक्षेऽपि जीवब्रह्मभेदस्य वक्ष्यमाणतया निवृत्त्ययोगाच्च । गौरनाद्यन्तवती (मन्त्रिकोपनिषत् मं. ५) महान्तं च समावृत्य प्रधानं समवस्थितम् । अनन्तस्य न तस्यान्तः संख्यानं चापि विद्यते । 'अचेतना परार्था च नित्या सततविक्रिया' इत्यादिश्रुतिस्मृतिभिः मायाविद्याज्ञानतमोनीहाराजाप्रधानाक्षराव्यक्तगोशब्दित पराङ्गीकृतजीवेश्वरोपाधेः अविनाशित्वप्रतिपादनेन तद्विरोधापत्तेश्च । नन्वादिश्चान्तवती चेति तथा तत्वाद्यन्तवती न भवतीति 'तस्याभिध्यानात् योजनात् तत्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिः' । 'विभेदजनके ज्ञाने नाशमात्यन्तिकं गते'रित्यादिश्रुतिस्मृतिभिः ज्ञानेन तन्निवृत्तेः प्रतिपादनेन तदनुसारेण गौरनाद्यन्तवतीत्यादि श्रुत्यर्थस्य वर्णनीयत्वात् । न च विश्वमायानिवृत्तिरित्यत्र मायाशब्दार्थो अन्य एवेति वाच्यम् । "देवात्मशक्तिं स्वगुणैर्निगूढां पञ्चाशद्भेदां पञ्चपर्वामधीमः" (श्वेताश्वतर अ. १, मं. ३) । 'क्षरं प्रधानमजाह्येका अस्मान्मायी सृजते विश्वमेतत् । तस्मिंश्चान्यो मायया संनिरुद्धः ।' मायां तु प्रकृतिं विद्यात् । (श्वेताश्वतर ४-१०)। 'यदा तमस्तन्न दिवा न रात्रि'रित्यादि (श्वेताश्वतर ४-१८) पूर्वोत्तरवाक्येषु शक्तिपञ्चपर्वप्रधानाजामायातमःशब्दैः प्रतिपन्नस्यास्मदभिमतमूलाज्ञानस्यैव विश्वमायानिवृत्तिः इत्यत्रापि प्रतिपादनीयत्वात् । न चात्र विश्वशब्दविशेषणात् अन्यत्वं मायानिवृत्तावपि तत्कार्यप्रपञ्चस्यानिवृत्तेः अपुरुषार्थत्वं इत्याशङ्कावारणाय मायानिवृत्त्या तत्कार्यप्रपञ्चस्यापि निवृत्तिरित्यर्थस्फुटीकरणाय मायाया विश्वात्मत्वप्रतिपादनस्यावश्यकत्वात् । मायानिवृत्तिरित्युक्ते एकदेशेनापि तन्निवृत्तिः उक्ता स्यात् । ग्रामैकदेशे दग्धेऽपि ग्रामो दग्ध इति व्यवहारदर्शनात् । तन्माभूदित्येतदर्थं कात्स्न्र्यपरविश्वशब्दस्यावश्योपादेयत्वाच्च । न चाज्ञानस्य निरंशत्वादेकदेशाभावः । वियदादि सांशकार्यान्वयेन तस्यापि सांशत्वोपगमात् । 'विकारजननीमज्ञामष्टरूपां अजां ध्रुवाम्' 'अजामेकां लोहितशुक्ल-

कृष्णाम्' (श्वेताश्वतर ४-५), 'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च। अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा॥' (भ. गी. अ. ७, श्लो. ४) इत्यादिश्रुतिस्मृतिभिः जगदुपादानभूतास्मदभिमताविद्यायाः सांशत्वप्रतिपादनाच्च। न 'चान्त' इत्यस्य पौनरुक्त्यम्। तस्य प्रारब्धकर्मसमाप्तिप्रतिपादकतया प्रयोजनवत्वात्। न च भूयःपदानर्थक्यम्। निवृत्तस्य निवृत्त्ययोगात् इति वाच्यम्। निवृत्तस्यैव निवृत्तेरभ्युपगमात्। तथा च श्रुत्यन्तरं 'विमुक्तश्च विमुच्यत' इति पूर्वं आवरणशक्तिविशिष्टतया निवृत्तिः प्रारब्धभोगसमाप्तौ विक्षेपशक्तिविशिष्टतया स्वरूपेण निवृत्तिरिति तत्सार्थक्योपपत्तेश्च। यद्वा भूयश्च भूयोः भूयः तस्य प्रक्रान्तदेवस्याभिध्यानात् तद्विषयकनिदिध्यासनात् योजनादुपायात्तत्वभावात् तत्वाविर्भावात् ब्रह्मसाक्षात्कारात् विश्वमायानिवृत्तिरिति योजना। यद्वा अभिध्यानं निदिध्यासनं योजनं श्रवणमनने तत्वभावो ब्रह्मसाक्षात्कारः इति श्रवणादिचतुष्टयमुक्तम्। यद्वा तस्य देवस्य अभिध्यानं सङ्कल्पस्तद्रूपाद्योजनादुपायान्निष्पन्नतत्वभावात् ब्रह्मसाक्षात्कारात् विश्वमायानिवृत्तिरिति। एवं च जीवब्रह्मभेदोपाधिः मायाशब्दितमज्ञानं ब्रह्मसाक्षात्कारेण निवर्तत इति मायारूपोपाधिनिवृत्तिप्रयुक्तनिवृत्तिप्रतियोगित्वं जीवब्रह्मभेदस्येति तस्यौपाधिकत्वं अकामेनापि स्वीकार्यमिति चेदुच्यते। जीवब्रह्मभेदोऽनौपाधिकः किन्तु स्वाभाविक एव वाच्यः। तस्य मोक्षकालेऽपि सत्वात्। ब्रह्मविदाप्नोति परम्' 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' (तैत्तिरीय २-१) 'रसं ह्येवायं लब्ध्वानन्दी भवति' 'एतमानन्दमयमात्मानं उपसंक्रम्य' 'इमान् लोकान् कामान्नी कामरूप्यनुसंचरन्' (तै. भृ. वल्ली) 'सूर्यद्वारेण ते विरजाः प्रयान्ति।' (मुण्डके १ खं. २, मं. ११)। यत्रामृतः स पुरुषो ह्यव्ययात्मा परात्परं पुरुषमुपैति दिव्यम्। 'न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्। सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः॥ स एकधा भवति त्रिधा भवति पञ्चधा भवति। (छां. अ. ७, खं. २६, मं. २) परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते। 'स उत्तमः पुरुषः' स तत्र पर्यैति जक्षन् क्रीडन् रममाणः। स्त्रीभिर्वा यानैर्वेत्यादि'

(छां. अ. ८, खं. १२, मं. ३) श्रुतिभिः मोक्षेऽपि भेदप्रतिपादनात् । न चोदाहृतश्रुतीनां जीवन्मुक्तिपरत्वं सगुणमुक्तिपरत्वं वा तत्रास्माभिः भेदाभ्युपगमादिति वाच्यम् । जीवतो मुक्तिरित्यस्य व्याहतत्वात् । जीवद्दशायाः संसाररूपत्वात् । पराभिमतजीवन्मुक्तेः अन्यत्र निरस्तत्वाच्च । सगुणमुक्तेः परेणोपासनासाध्यत्वोपगमेन ज्ञानफलत्वानभ्युपगमाच्च । ब्रह्मविदाप्नोतीत्याद्युदाहृतश्रुतीनां त्वन्मते ज्ञेयब्रह्मनिष्ठतया ज्ञानफलीभूतपरममुक्तेरेव तत्र प्रतिपादनीयत्वाच्च । न च तस्याः ज्ञेयब्रह्मनिष्ठत्वेऽपि फलप्रतिपादनमात्रस्य सगुणब्रह्मोपासनफलप्रतिपादकतयोत्कर्ष इति वाच्यम् । तत्तत्सगुणब्रह्मविद्याप्रकरणेष्वेव फलस्यापि प्रतिपादनेन तदनपेक्षणात् । 'य एषोन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' (य एषोन्तरक्षिणि पुरुषो दृश्यते) (छां. ४-११, १५)। इत्यन्तरादित्यविद्यायां अक्षिविद्यायां च उदेति ह वै सर्वेभ्यः पाप्मभ्यः य एवं वेदेति सकलपापनिवृत्तिरूपस्य फलस्य स क्रतुं कुर्वीत मनोमय इत्यादि शाण्डिल्यविद्यायामेतमितः प्रेत्याभिसम्भवितास्मीति ब्रह्मप्राप्तिरूपस्य फलस्य च य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाचेत्युपकोसलविद्यायां तत्पुरुषो मानवः स एनान् ब्रह्मगमयतीत्यादिना' (छां. ५-१०-२) अर्चिरादिमार्गेण ब्रह्मप्राप्तेः यस्त्वेदमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते (छां. ५-१९-१) इति वैश्वानरविद्यायां तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेत एवं हास्य सर्वे पाप्मानः प्रदूयन्ते' (छां. ५-२४-३) इति सकलपापनिवृत्तेः, तस्मिन्यदंतन्स्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम् इति दहरविद्यायाम् (छां. अ. ८, खं. १, मं. १) अथ 'य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यकामांस्तेषां सर्वेषु लोकेषु कामचारो भवतीति' (छां. अ. ८, खं. १, मं. ६) सर्वकामावाप्तेः, सोन्वेष्टव्यः स विजिज्ञासितव्य इति प्रजापतिवाक्योक्तेन्द्रविद्यायां अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य धूत्वा शारीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि (छां. अ. ८, खं. १३, मं. १) इति सकलपापनिवृत्ति-

---

1. संसारिण इत्यर्थः ।

पूर्वक ब्रह्मप्राप्तेश्च प्रतिपादनात् । न च अंतरादित्यविद्यायां वैश्वानरविद्यायां च पापनिवृत्तिमात्रप्रतिपादनेन च निर्विशेषब्रह्मप्रकरणे श्रूयमाणस्य ब्रह्मप्राप्तिलक्षणफलस्य तत्रोत्कर्ष इति वाच्यम् । सगुणब्रह्मविद्यान्तरफलभूताया ब्रह्मप्राप्तेरर्थादन्यत्राप्यन्वयसंभवेन तत्र निर्विशेषब्रह्मप्रकरणोक्तफलानपेक्षणात् । किं च 'ब्रह्मविदाप्नोति परम्' (तै. उ. ब्रह्मवल्ली प्र. अनुवाक) इत्यादिनोक्तं ब्रह्म सविशेषमेव न निर्विशेषम् । ब्रह्मशब्दस्य गुणपूर्तिवाचित्वात् । तथा च श्रुतिः 'अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुणा इति (अथर्वशिरः) । बृहति बृंहयति तस्मादुच्यते परं ब्रह्मेति (आग्निवेश्यश्रुतिः) । ब्रह्मत्वात् बृंहणत्वाच्च तद्ब्रह्मेत्यभिधीयते इति श्रौतस्मार्तनिर्वचनेनापि गुणपूर्तिसिद्धिः । देशकालबृहत्त्ववत् संकोचाभावेन गुणतो बृहत्वस्यापि तत्र प्रवेशात् सत्यशब्दस्यापि यत्तत्सदमृतं अथयत्तितन्मर्यं अथ यद्यन्तेनोभेयच्छति । तस्माद्यमिति मुक्तामुक्तनियामकपरतया श्रौतनिर्वचनसत्वेन नियमनस्य च संकल्परूपज्ञानविशेषतया सविशेषपरत्वात् । पारमार्थिकत्वरूपसत्यत्वस्य प्रपञ्चसाधारण्येन ब्रह्मसाधारणधर्मप्रतिपादनपरे वाक्ये उदाहृतश्रुत्यन्तरोक्तस्य सत्वस्य ब्रह्मासाधारणत्वेन अत्र ग्राह्यत्वाच्च । ननु ब्रह्मेतरस्य मिथ्यात्वोपगमात् पारमार्थिकत्वरूपसत्यत्वस्य ब्रह्मासाधारण्यमिति चेत् । किं पारमार्थिकत्वरूपसत्यत्वस्य ब्रह्मलक्षणत्वान्यथानुपपत्त्या ब्रह्मेतरमिथ्यात्वं किं वा मानान्तरेण तन्मिथ्यात्वसिद्ध्या पारमार्थिकत्वस्य ब्रह्मासाधारण्यम् । नाद्यः । श्रुत्यन्तरोक्तसत्यत्वपरत्वेनापि तस्य ब्रह्मलक्षणपरतया ब्रह्मेतरमिथ्यात्वानाक्षेपकत्वात् । द्वितीयेऽपि तत्साधकं मानान्तरं प्रत्यक्षमनुमानं आगमो वा । नाद्यः । जगन्मिथ्यात्वसाधकप्रत्यक्षस्यादर्शनात् । प्रत्युत घटः सन्नित्यादिप्रत्यक्षेण तत्सत्यत्वस्यैव सिद्धेश्च । न द्वितीयः । स्वतन्त्रप्रमाणावष्टम्भेन विना सहचारमात्रेणार्थसाधनायोगात् । अन्यथातिप्रसङ्गात् । दृश्यत्वाद्यनुमानानां च विस्तरेण अन्यत्र निरस्तत्वाच्च । न तृतीयः । ब्रह्मेतरसर्वमिथ्यात्वपरश्रुतीनामदर्शनात् । 'एकमेवाद्वितीयम्' (छां. अ. ६, खं. २, मं. १), 'नेह नानेत्यादिकम्' (कठ अ. २, वल्ली १, मं. ११) वाक्यं

श्रूयत इति चेत् सत्यं तथाविधश्रुतीनां पूर्वोत्तरवाक्यानुरोधेन श्रुत्यन्तरानुरोधेन चार्थस्य वर्णनीयत्वात्। यथा चैतत् तथाग्रे वक्ष्यामः। तस्मात्सत्यशब्दस्य मुक्तामुक्तनियामकपरतया मुमुक्षुज्ञेयं ब्रह्म सविशेषमिति स्थितम्।

किं च ज्ञानशब्दस्य अन्तोदात्ततया ज्ञानवत्परत्वेन ततोऽपि ज्ञानरूपधर्मसिद्धिः। अत एव ब्रह्मणो विपश्चित्वं उक्तम्। विविधं पश्यति चिद्यस्य स विपश्चित् इति तदर्थप्रतीतेः। न च त्वन्मते ब्रह्मशब्दस्यापि गुणपूर्तिवाचितया सहप्रयोगानुपपत्तिरिति शङ्क्यम्। प्रमाकरणं प्रमाणम्। सास्नादिमती गौरित्यादौ लक्ष्यपरप्रमाणशब्दादेः प्रमाकरणमित्यादाविव विवक्षावत् ब्रह्मशब्दस्यापि अविवक्षितार्थतया सहप्रयोगोपपत्तेः। 'रसं हि एवायं लब्ध्वा आनन्दी भवति' (तैत्तिरीये ब्रह्मवल्ली अनु. ८) इत्यत्रापि रसशब्देन सविशेषमेव ग्राह्यम्। पूर्वत्र 'सोऽकामयत बहुस्याम् प्रजायेय' इति। 'स तपोऽतप्यत' (तैत्ति. उ. ब्र.व. षष्ठानुवाकः) इत्यादिना ज्ञानेच्छादेः तत्रैव तदात्मानं स्वयमकुरुत' इति कृतेः उत्तरत्र च 'स एको ब्रह्मण आनन्दः' (तै. ब्र. अष्टमानुवाकः), 'आनन्दं ब्रह्मणो विद्वान्' (तै. ब्र. ४ अनुवाकः) इत्यादिना आनन्दरूपधर्मस्य च प्रतिपादनात्। 'एतमानन्दमयमात्मानं' (तै. उ. भृगु. १० अनुवाकः) इत्यत्रापि सविशेषमेव प्रतिपत्तव्यम्। 'विकारशब्दान्नेति चेन्न प्राचुर्यात्' (ब्र. सू. १ अ. अधि, ६, सू. १३) इत्यादि सूत्रकृतैव मयटः प्राचुर्यार्थत्वप्रतिपादनेन निरतिशयानन्दरूपधर्मस्यैव प्राप्तेः। सूर्यद्वारेण ते विरजाः प्रयान्ति' (मुं. खं. २, मं. ११) 'यत्रामृतः स पुरुषो ह्यव्ययात्मा', 'परात्परं पुरुषमुपैति दिव्यम्' इत्यत्रापि प्राप्यः पुरुषः सर्वज्ञत्वादिगुणकः। 'यः सर्वज्ञः सर्ववित्', 'यस्य ज्ञानमयं तपः' (मुं. प्र. खं. मं, ९) इत्यादि पूर्ववाक्येन तस्य तथा प्रक्रान्तत्वात् 'ब्रह्म वेद ब्रह्मैव भवति' (मुण्डके द्वि. मं. ९) इत्युपसंहारस्य उपक्रमानुसारेण नेयत्वात्। भवतीत्यस्य प्राप्त्यर्थकत्वोपपत्तेः। न च प्राप्त्यर्थत्वे आत्मने पदित्वात् परस्मैपदानुपपत्तिः। 'यदा पश्यः पश्यते' (मुण्डके ३-१-३) इत्यादौ आत्मनेपदवत् छान्दसत्वोपपत्तेः। न च यत्तदुद्देश्यं

इत्याद्युपक्रमेण ब्रह्मणो निर्विशेषत्वसिद्धिः। 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातम्', 'यया तदक्षरमधिगम्यते' (प्र. मु. प्र. खं. ३, ५) तस्यैष आत्मा विवृणुते तनूम् स्वाम्' (कठ प्र. अ. वल्ली २, मं. २३) इत्यादिपूर्वोक्तवाक्यानुसारेण तदर्थस्य वर्णनीयत्वात्। अन्यथा परस्परव्याहतभाषित्वापत्तेः इत्युक्तम्। 'न पश्यो मृत्युं पश्यतीति' (छां. ७-२६-२) ब्रह्मविद्योक्तं मुमुक्षुप्राप्यं ब्रह्मापि न निर्विशेषम्। उपक्रमे 'तरति शोकमात्मवित्' इति चेतनवाच्यात्मशब्दश्रवणात्। तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारः' इति उपसंहारेऽपि 'आदित्यवर्णं तमसः परस्तात्' इति वाक्यान्तरानुसारेण सविशेषस्यैव अङ्गीकर्तव्यत्वात्। यत्र नान्यत् पश्यति नान्यत् शृणोति नान्यद्विजानाति स भूमा यो वै भूमा तत्सुखम्' (छां. ७-२३) इत्यादेः ब्रह्मानन्दे अनुभूयमाने मुक्तः स्वर्गादिवैषयिकसुखं न पश्यतीत्यर्थपरत्वेन ततोऽपि निर्विशेषासिद्धेश्च। 'परंज्योतिरुपसंपद्य' (छां. ८-३-४ इत्यत्र 'सत्यकामः सत्यसङ्कल्पः' इत्यादिना सत्यकामत्वादिधर्मप्रतिपादनेन सविशेषपरत्वाच्च। न चोद्धृतश्रुतिषु तत्तद्धर्माणां प्रतीतावपि श्रुतीनां न तत्र तात्पर्यमिति वाच्यम्। सगुणे ब्रह्मणि समन्वयानुक्तिप्रसङ्गात्। सगुणोपासनाननुष्ठानप्रसङ्गात्। गुणोपसंहारानुपसंहारयोः अकर्तव्यत्वापत्तेश्च। न हि श्रुतीनां गुणेष्वपि तात्पर्याभावे तत्त्रितयं युज्यते। न च गुणेष्ववान्तरतात्पर्यं निर्विशेषे तु महातात्पर्यमिति युक्तम्। तथा सति गुणानामपि ब्रह्मवत्पारमार्थिकत्वस्य दुर्वारत्वात्। अवान्तरतात्पर्यविषयस्य महातात्पर्यविषयसमसत्ताकत्वात्। प्रयाजादौ तथा दर्शनात्। ननु 'तमेवैकं जानथ आत्मानम्' 'अन्या वाचो विमुञ्चथ' (मुं. उ. २-२-५) इति आत्मस्वरूपमात्रस्य ज्ञेयत्वावगमात्। 'केवलो निर्गुणश्च' (श्वेताश्व. अ. ६, मं. ११) इति गुणानां तत्र निषिद्धत्वाच्च न तत्र श्रुतितात्पर्यम्। न चोपासनार्थं गुणादिसिद्धिरिति वाच्यम्। अन्यपरैः मन्त्रार्थवादैः देवताविग्रहादाविव बाधकाभावेन निर्विशेषपरवेदान्तैः गुणानां असिद्धयोपासनोपपत्तेः तात्पर्याभावेन विशेषोपपत्तेश्च इति चेन्न। तथात्वे 'अन्तस्तद्धर्मोपदेशात्' (ब्र.सू. अ. १, अधि. ६, सू. १)

इत्यादिना सविशेषे ब्रह्मणि 'य एषोऽन्तः' इत्यादेः समन्वयानुक्तिप्रसङ्गात्। प्रयाजादावपि अवान्तरतात्पर्यानभ्युपगमप्रसङ्गाच्च। सगुणोपासनानुष्ठानवत् तदनुष्ठानोपपत्तेः। 'तमेवैकं जानथ' इति, अत्रापि प्रकृतपरामर्शिना तच्छब्देन सविशेषस्यैव प्रतिपन्नत्वात्। 'निर्गुणः' इत्यत्रापि 'साक्षी चेता' इति साक्षाद्‌द्रष्टृत्वादिधर्मप्रतिपादनेन हेयगुणनिषेधपरत्वेन उपादेयगुण(धर्म)विशिष्टे ब्रह्मणि श्रुतितात्पर्याभ्युपगमे बाधकाभावाच्च इत्यास्तां तावत्॥

तस्मान्मोक्षेऽपि जीवब्रह्मभेदस्य प्रमितततया कथं तस्य औपाधिकत्वमिति।

किं च जीवब्रह्मभेदस्य अज्ञानोपाधिकतया तन्निवृत्या निवर्तेत इत्यनुपपन्नम्। तथात्वे प्रमाणाभावात्। "विभेदजनकेऽज्ञाने नाशमात्यंतिकं गते। आत्मनो ब्रह्मणोऽभेदं असंतं कः करिष्यति। (विष्णु पु. ६-७-९६) स्मृतिरस्तीति चेन्न। भेदविरोधी विभेद इति यावत्। तज्जनके अज्ञाने तत्वज्ञानविरोधिनि दोषे आत्यंतिकं नाशं गते सति जीवब्रह्मणोरसंतं अभेदं कः करिष्यति इत्यर्थपरतया तस्यास्त्वन्मतप्रतिकूलत्वात्। तस्याः त्वदभिमतार्थपरत्वे च विशब्दवैयर्थ्यात्। जीवब्रह्मभेदे वैविध्याभावात्। विजातीयभेदमादायैव वैविध्यस्योपपादनीयत्वात्। न जडभेदमादाय वैविध्यम्। तद्भेदस्य परेण मिथ्यात्वात्युपगमेऽपि औपाधिकत्वानभ्युपगमात्। अन्यथा तदभेदस्य तात्विकत्वापत्तेः। ननु "एक एव तु भूतात्मा" (ब्रह्मबिन्दूपनिषत् मं. १२) "यथा ह्ययं ज्योतिरात्मा विवस्वान्" मायया ह्यन्यदिव॥ इत्यादि श्रुतिषु साक्षादेव जीवब्रह्मभेदस्य औपाधिकत्वप्रतिपादनात् "नान्योऽतोऽस्ति द्रष्टा", "नात्र काचन भिदास्ति" इत्यादि श्रुत्यादिषु भेदनिषेधाच्च उदाहृतस्मृतेः जीवब्रह्मभेदः औपाधिकः तन्निवृत्याच निवर्तते। इति अर्थपरत्वमवश्यं अंगीकर्तव्यमिति चेन्न। "एक एव तु भूतात्मा" (ब्रह्मबिन्दूपनिषत्) इति श्रुतौ जीवात्मनो देवमनुष्यस्त्रीपुरुषादिभेदस्यौपाधिकत्वपरत्वात् भूतात्मशब्दस्य जीवे

मुख्यत्वात्। तस्य परमात्मनि मुख्यत्वेऽपि अंतर्यामिभेदौपाधिकत्व-परत्वेन जीवब्रह्मभेदासंस्पर्शात्। तथा च श्रुतिस्मृतयः। "नैव स्त्री न पुमानेष नैव चायं नपुंसकः"। "एकः सन् बहुधा विचारः पुमान्न देवो न नरो न पशुर्न च पादपः" इति। श्वेताश्व. अ. ५, मं. १०)

किं च "भूते भूते व्यवस्थितः" इति वीप्सया भूतशब्दितसकल-जीवावस्थानं परमात्मनि प्रतिपाद्यत इति तदंतर्यामिभेदौपाधिकत्व-परत्वमावश्यकम्। न च भूतशब्दस्य देहमात्रमर्थः। तस्य देहविशिष्ट-चेतनवाचित्वात्। अन्यथा "न हिंस्यात् सर्वा भूतानि" "यतो वा इमानि भूतानि जायन्ते" इत्यादावपि भूतशब्दस्य तन्मात्रपरत्वं स्यात्। न चात्र देवः क्षेत्रेष्वेवं अजोऽयं इत्यादि श्रुत्यंतरानुसारेण भूतशब्दस्य शरीरमात्रपरत्वं युक्तम्। तत्र तथात्वेऽपि प्रकृते मुख्यार्थस्यैव ग्राह्यत्वात्। परमात्मनः शरीरेष्वस्थानवत्, "य आत्मनि तिष्ठन्" इत्यादि श्रुत्या जीवात्मांतरवस्थानस्यापि प्रतिपन्नत्वात्। "यथा ह्ययं ज्योतिः" इत्यत्रापि अंतर्यामिभेदस्य रामकृष्णादिभेदस्य च औपाधि-कत्वं प्रतिपाद्यते। एतेन 'मायया ह्यन्यदिव' इति वाक्यं व्याख्यातम्। परमात्मा स्वेच्छया रामकृष्णाद्यनेकरूपं प्राप्नोतीत्यर्थपरत्वात्। "नान्योऽतोऽस्ति द्रष्टा" इत्यस्यांतर्यामिणोऽन्यः सर्वज्ञो नास्तीत्येव अर्थः। "नात्र काचन भिदाऽस्ति" इत्यत्र परमात्मनि स्वगतभेद एव निषिध्यत इति अन्यत्र विस्तरः। तस्मान्मुक्तौ भेदो दुर्वारः।

ननु "यत्रत्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्" (बृ.उ. ४-४-१४) इति मुक्तौ भेदमात्रनिषेधकश्रुतिविरोध इति चेत्। न। यत्र यदा अस्य ज्ञानिनः सर्वमात्मैवाभूत् स्वाभिन्नमभूत् तदा केन साधनेन कं ज्ञेयं पश्येत् केनापि किमपि न पश्येत्। अतो मुक्तस्य नाभेदः इति अनिष्ट-प्रसंजनमुखेन मुक्तिकाले भेदोऽङ्गीकार्य इत्येवं परत्वात्।

किं च "निरञ्जनः परमं साम्यमुपैति" (मुं. ३-१-३) "यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति", "एवं मुनेः विजानतः आत्मा भवति गौतम" (कठ. २-१-१५) इति श्रुतिभ्यां मुक्तौ साधर्म्यप्रतिपादनेन

भेदो दुर्वारः। न च "गगनं गगनाकारं" इत्यादिवदुपपत्तिः। तत्र गगनैक्यस्य प्रमाणसिद्धत्वेन एकस्यैव उपमानोपमेयभावाभ्युपगमेऽपि जीवब्रह्मैक्ये तदभावेन वैषम्यात्। तत्वमस्यादिवाक्यानां मानांतराविरोध्यर्थांतरपरत्वमित्युक्तत्वाच्च। न च सगुणमुक्तौ साधर्म्यम् न परममुक्ताविति वाच्यम्। पराभिमतपरममुक्तौ मानाभावात्। "ब्रह्म वेद ब्रह्मैव भवति" (मुं. ३-२-९) इत्यादिवाक्यानां ब्रह्मप्राप्तिरूपमोक्षपरत्वस्य प्रपंचितत्वात्। तद्यो यो देवानां प्रथमं प्रत्यबुध्यत "स एव तदभवत्" इत्यादीनामपि विष्णुरेव भूत्वेमान् लोकान् अभिजयति इत्यादि वैदिकप्रयोगानुसारेण सादृश्यगर्भत्वस्यैव वक्तव्यत्वात्।

किं च परमते मोक्षो नाम कः। किं अविद्यानिवृत्तिः उतानंदावाप्तिः अथोभयम्।

नाद्यः सुखदुःखाभावेतरत्वात्। कंटकादिनिवृत्तिवत् दुःखहेतूच्छेदरूपतया तस्याः पुरुषार्थत्वमिति चेत् तथापि किं ब्रह्मस्वरूप रूपा किं वा तदतिरिक्ता। नाद्यः। ब्रह्मस्वरूपस्य नित्यसिद्धतया साध्यत्वाभावेन अपुरुषार्थत्वात्। अनादेः दुःखप्रागभावस्य प्रायश्चित्तसाध्यत्वं तांत्रिकैरभ्युपगतं इति चेन्न। तत्र प्रागभावस्य उत्तरोत्तरसमयसंबन्धस्यैव प्रायश्चित्तसाध्यत्वोपगमात्। तद्वन्मोक्षे ब्रह्मस्वरूपातिरिक्तस्य साध्यस्याभावात्। न द्वितीयः। सत्यत्वे अद्वैतहानेः। मिथ्यात्वे अपुरुषार्थत्वप्रसंगात्। मिथ्याभूतस्य ज्ञाननिवर्त्यत्वनियमात्। मोक्षेऽपि अज्ञानांतरस्वीकारप्रसंगाच्च। न ह्यज्ञानं विना कल्पितस्य अवस्थानम्। अन्यथा इदानीमपि अज्ञानं न स्यात्। द्वितीयेऽपि आनंदावाप्तिः तत्साक्षात्कारो वा तत् संबन्धो वा तत्स्वरूपमेव वा। नाद्यद्वितीयौ। अनभ्युपगमात्। न तृतीयः। असाध्यत्वात्। एतेन अविद्यानिवृत्तिः आनंदावाप्तिश्च इत्युभयं पुरुषार्थः इति तृतीयविवक्षापि निरस्ता। तस्मात् अद्वैतिमते ब्रह्मनिर्विशेषत्वस्य प्रत्यग्ब्रह्मैक्यस्य जगन्मिथ्यात्वस्य च सकलप्रमाणविरुद्धत्वेन मोक्षस्य च वक्तुमशक्यत्वेन अद्वैतिमतं न प्रेक्षावदुपादेयमिति स्थितम्।

किं च ब्रह्मीभावोमोक्षः इति अद्वैतमतमनुपपन्नम्। ब्रह्मप्राप्तेरेव मोक्षत्वात्। अर्चिरादिगतिप्रतिपादनस्यापि तदर्थत्वात्। ज्ञानेन अज्ञाननिवृत्तौ ब्रह्मीभावस्य सर्वत्र संभवेन तदर्थं गत्यनपेक्षणात्। न च अज्ञाननिवृत्यर्थं गत्यपेक्षा। अधिष्ठानतत्वसाक्षात्कारस्यैव अज्ञानविरोधित्वोपगमात्। निवृत्ताज्ञानस्यैव गत्युक्तेश्च। अत एव ज्ञानोत्पत्यर्थं देशांतरगत्यपेक्षेति निरस्तम्। इहापि वेदांतेन तत्वज्ञान-संपादनसंभवात्। निष्पन्नतत्वज्ञानस्यैव गत्युक्तेश्च। अन्यथा अत्रे-दानीं श्रवणादौ कस्यापि प्रवृत्तिर्न स्यात्। न चेदानींतनश्रवणादिकं कालक्षेपार्थं न ज्ञानार्थमिति युक्तम्। अनुभवविरोधात्। ज्ञानार्थ-त्वेऽपि कालक्षेपार्थत्वोपपत्तेश्च। तस्मात् अर्चिरादिगतिः ब्रह्मप्राप्त्यर्थै-वेऽति मोक्षेऽपि जीवब्रह्मभेदो दुर्वारः।

ननु ब्रह्मप्राप्त्यर्थं अर्चिरादिगतिप्रतिपादनमित्यसंगतम्। तस्य सर्वगतत्वेन नित्यप्राप्तत्वात्। देशविशेषावच्छेदेन प्राप्यत्वस्य अकल्प-नीयत्वात् वैयर्थ्यादिति चेत्। भ्रांतोऽसि। न हि वयं ब्रह्मणो देश-विशेषावच्छेदेन प्राप्यत्वं कल्पयामः। येन वैयर्थ्यं स्यात्। किंतु-श्रुतिस्मृतिभिः प्रतिपन्नं तत् न त्यागार्हमिति ब्रूमः। तथा च श्रुति-स्मृतयः "स एनान् ब्रह्म गमयति" (छां. ५-१०-२) "व्यपोह्य शीर्ष-कपाले भूरित्यग्नौ प्रतितिष्ठति" "तयोर्ध्वमायन् अमृतत्वमेति" (कठ. २-६-१६) "सूर्यद्वारेण ते विरजाः प्रयांति" (प्र. मुं. खं. २ मं. १२) स एतं देवयानं पंथानमापद्य अग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकं ब्रह्मालंकारेणालंकृतो ब्रह्म विद्वान् ब्रह्मवाभिप्रैति, (कौषीतकी १-३-४) ऊर्ध्वमेकस्थितस्तेषां यो हित्वा सूर्यमंडलम्। ब्रह्मलोकमतिक्रम्य तेन याति परां गतिं "अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्। तत्र प्रयाता गच्छंति ब्रह्म ब्रह्मविदो जनाः" (भ. गी. अ. ८, श्लो. २४, २५) इत्यादिकः। न च उदाहृतश्रुतिस्मृतीनां विद्वत्प्रशंसापरत्वमिति युक्तम्। यथाश्रुतार्थपरत्वे बाधकाभावात्। अन्यथा वेदार्थमात्रत्यागापातात्। विशेषहेत्वभावात्। ननु तत्तल्लोकावच्छिन्नं ब्रह्म प्राप्यमिति ब्रह्मप्राप्तिः

नैकाकारा इति चेत् । किं कुर्मः । प्रमाणसिद्धार्थत्यागायोगात् । तथा च पुराणवचनानि ।

"आत्मेत्येव परं देवं उपास्य हरिमव्ययम् ।
केचिदत्रैव मुच्यंते नोत्क्रामंति कदाचन ॥
अत्रैव च स्थितिस्तेषां अंतरिक्षे तु केचन ।
केचित् स्वर्गे महर्लोके जने तपसि चापरे ॥
केचित् सत्ये महाज्ञानाः गच्छंति क्षीरसागरम् ।
तत्रापि क्रमयोगेन ज्ञानाधिक्यात् समीपगाः ॥" गारुडे ॥

सालोक्यं च सरूपत्वं सामीप्यं योग एव च ॥ इति । तत्र सालोक्यं समानलोकत्वं विष्णुलोकनिवासः । सामीप्यं विष्णुसमीपे वर्तमानत्वम् । तत्सरूपत्वं चतुर्भुजादिरूपतत्सादृश्यम् । योगः सायुज्यं तत्तु विष्णुदेहं प्रविश्य वर्तमानत्वमिति विवेकः ।

ननु विष्णुलोकः किं अनित्यो नित्यो वा । नाद्यः । अनित्यलोकस्य मुक्तप्राप्यत्वायोगात् । मुक्तेः नित्यपुरुषार्थत्वोपगमात् । न द्वितीयः । नित्यलोकसद्भावे प्रमाणाभावात् । इति चेन्न । श्रुतीनामेव तत्र प्रमाणत्वात् । तथाहि—"अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य धूत्वा शरीरं अकृतं कृतात्मा ब्रह्मलोकं अभिसंभवामि" (छां. ८-१३-१) इति श्रुतिः तावत्तत्र प्रमाणम् । तत्र अकृतमिति ब्रह्मलोकविशेषणम् । तस्य नित्यत्वप्रतिपादनार्थम् । न च शरीरविशेषणं तदिति युक्तम् । तस्य कृतत्वेन ब्रह्मलोकविशेषणत्वस्यैव युक्तत्वात् । न च ब्रह्मैव लोकः ब्रह्मलोकः इत्यर्थाश्रयणेन विवक्षितार्थसिद्धिरिति युक्तम् । प्रजापतेः सभां वेश्म प्रपद्ये इत्यत्रैव उत्तरत्र श्रवणेन ब्रह्मणो लोको ब्रह्मलोक इति षष्ठीतत्पुरुषस्य अंगीकर्तव्यत्वात् । न च ब्रह्मणः चतुर्मुखस्य लोकः इति तदर्थः । प्रजापतेः सभां वेश्म इत्यत्रैव विशेषितत्वात् इति वाच्यम् । तस्य जन्यत्वेन अकृतत्वविशेषणायोगात् । प्रजानां पतिः प्रजापतिरिति योगेन प्रजापतिशब्दस्य विष्णुपरत्वसंभवाच्च । एवं "यो ह वा एतामेवं वेद अपहत्य पाप्मानं अनन्ते

स्वर्गे लोके ज्येये प्रतितिष्ठति" (केन उ. खं. ४, मं. ९) इति नित्यलोकः श्रूयते। अत्र स्वर्गलोकशब्दो न प्रसिद्धस्वर्गलोकपरः तस्य अंतवत्वात्। प्राधान्येन तस्य मुक्तप्राप्यत्वायोगाच्च। किंतु वैकुण्ठलोकपरः तथा च अरण्यपर्वणि आर्ष्टिषेणवचनम्।

"यमाहुः सर्वभूतानां प्रकृतेः प्रकृतिं ध्रुवाम्।
अनादिनिधनं देवं प्रभुं नारायणं परम्॥
ब्रह्मणः सदनात्तस्य परं स्थानं प्रकाशते।
देवा अपि यन्न पश्यंति दिव्यं तेजोमयं शिवम्।
अत्यर्कानलदीप्तं तत् स्थानं विष्णोर्महात्मनः॥
स्वयैव प्रभया राजन् दुष्प्रेक्ष्यं देवदानवैः।
यतयस्तत्र गच्छंति देवं नारायणं हरिम्॥
परेण तपसा युक्ताः भाविताः कर्मभिः शुभैः।
योगसिद्धा महात्मानः तमोमोहविवर्जिताः॥
तत्र गत्वा पुनर्नेमं लोकमायांति भारत।
स्थानमेतन्महाराज ध्रुवमक्षयमव्ययम्॥
ईश्वरस्य सदस्येतत् प्राणमात्रं युधिष्ठिर॥" इत्यादि॥

तथा मोक्षधर्मे—

"प्राप्य तत् परमं स्थानं मोदन्तेऽक्षरमव्ययम्॥" इति॥

"ततोऽव्ययं स्थानमुपेत्य ब्रह्म दुष्प्राप्यमभ्येति तत् शाश्वतं वै।" इति च।

तथा मौसले "देवाः—दिव्यं स्थानमजरं चाप्रमेयं दुर्विज्ञेयं चागमैः गम्यमद्य। गच्छ प्रभो रक्ष चास्मान् प्रपन्नान् कल्पे कल्पे जायमानः स्वमूर्त्या"॥ इति॥

तथा विष्णुपुराणे—

योगिनाममृतं स्थानं तद्विष्णोः परमं पदम्।
एकांतिनः सदा ब्रह्म ध्यायिनो योगिनो हि ये॥
तेषां तत् परमं स्थानं यत्प्रपश्यंति सूरयः॥ इति॥

मुद्गलोपाख्याने च—

"ब्रह्मणः सदनादूर्ध्वं तद्विष्णोः परमं पदम् ।" इति ।

ननु अर्चिरादिगतिप्राप्यो लोकः चतुर्मुखलोकः एवास्तु। तथाहि कौषीतकीनां उपनिषदि (अ. १ मन्त्र ३) "स एतं देवयानं पन्थानमापद्य अग्निलोकमागच्छति स वायुलोकं स आदित्यलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकं" इत्युक्तो ब्रह्मलोकः चतुर्मुखलोक एव । विजरानदील्योवृक्षः सालज्यं इत्यादिना नदीवृक्षादीनां अनित्यपदार्थानां प्रतिपादनात् । नित्यलोके तदभावात् । "तस्मिन् ब्रह्मास्ते तमित्थंवित् पादेनैव अग्र आरोहति । तं ब्रह्मा पृच्छति कोऽसीति । तं प्रतिब्रूयात् (कौषी. अ. १ मं. ५) "ऋतुरस्म्यार्तवोस्म्याकाशाद्योनेः" इति (अ. १ ख. ६) "पुल्लिंगब्रह्मशब्देन तस्य प्रतिपादनात् ।" तेजोभूतस्य भूतस्य भूतस्य भूतस्यात्मा, त्वमात्मासि यस्त्वमसि सोऽहमस्मीति तमाह कोऽहमस्मीति । सत्यमिति ब्रूयादित्यादिना (कौषी. अ. १ ख. ६) तल्लोकंगतस्य ब्रह्मात्मविषयप्रश्नोत्तरयोः दर्शनाच्च । न हि मुक्तौ स्वात्मविषयप्रश्नः तदुत्तरं वा युज्यते । तस्मात् ब्रह्मलोकः सत्यलोक एव । न चैवं प्रजपतिलोकम् इत्यनेन पुनरुक्तिः इति युक्तम् ।

"नारायणात् ब्रह्मा जायते । नारायणात् रुद्रो जायते । नारायणात् प्रजापतिः प्रजायते । त्वं रुद्रः, त्वं ब्रह्मा, त्वं प्रजापतिः (नारायणोपनिषत्) इत्यादाविव प्रजापतिशब्दस्य अर्थांतरपरत्वाभ्युपगमेन पुनरुक्त्यभावात् । एवं "तत्पुरुषो मानवः" "स एनान् ब्रह्म गमयति" (छां. ४-१५-५, ५-१०-२) "एष देवयानः पंथाः" तत्पुरुषो मानवः, स एनान् ब्रह्म गमयति एष देवपथो ब्रह्मपथः (छां. ४-१५-५) एतेन प्रतिपद्यमानाः इमं मानवमावर्तं नावर्तंत इति छांदोग्ये (४-१५-५) पञ्चाग्निविद्यायां उपकोसलविद्यायां च प्रतिपाद्यमानं अर्चिरादिप्राप्यकार्यब्रह्मैव न परं ब्रह्म कौषीतकिवाक्यानुसारात् । "पुरुषो मानव एत्य ब्रह्मलोकान् गमयति तेषु ब्रह्मलोकेषु परावंतो वसंति । तेषां न

पुनरावृत्तिरिति" बृहदारण्यकोक्तपंचाग्निविद्यायां ब्रह्मणः परमायुः-पर्यंतं स्पष्टमेव ब्रह्मलोकवासः प्रतिपाद्यते। न चैवं पुनरावृत्तिप्रति-पादनायोगः॥ ब्रह्मणा सह तल्लोकं गतानामुपासकानां मुक्तेरभ्युपग-मेनापुनरावृत्त्युपपत्तेः। तथा च श्रुतिस्मृती।

'ते ब्रह्मलोके तु परांतकाले परामृतात् परिमुच्यंति सर्वे।' ब्रह्मणा सह ते सर्वे संप्राप्ते परिसंचरे। परस्यांते कृतात्मानः प्रविशंति परं पदं (स्मृतिः) इति। यदा वै पुरुषोऽस्मात् लोकात् प्रैति वायुमागच्छति। स आदित्यमागच्छति। स चंद्रमसमागच्छति स लोकमागच्छत्य-शोकमहिमं तस्मिन् वसति शाश्वतीः समाः॥' इति बृहदारण्यक-वाक्यमप्येवं परम्। न च शाश्वतीरित्यनुपपन्नम्। बहुकालावस्था-यित्वेऽपि तदुपपत्तेः। ब्रह्मलोकेऽपि दुःखाभावेनाशोकमहिममिति विशेषणोपपत्तेश्च। यथा पादोदरस्त्वचा विनिर्मुच्यते। एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकमिति प्रश्नोपनिषदि श्रूयमाणो ब्रह्मलोकोऽपि चतुर्मुखलोक एव। स एतस्मात् जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते इत्यव्यवहितोत्तरवाक्येन जीवघनशब्दित-चतुर्मुखोपदेशादुपासकस्य परब्रह्मसाक्षात्कारप्रतिपादनात्। न च ओमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीतेति ध्यानविषयस्य ब्रह्मलोक-मित्यत्र ब्रह्मशब्दार्थत्वं युक्तम्। ध्यानेक्षणप्राप्तीनामेकनिष्ठत्वावश्यं-भावादिति वाच्यम्। परब्रह्मणः परमप्राप्यत्वेऽपि सूर्यादीनामिव मध्ये चतुर्मुखस्याप्युपासकप्राप्यत्वाभ्युपगमे विरोधाभावात्। 'अकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि' इति छांदोग्यवाक्यमपि चतुर्मुखलोकपरं प्रजा-पतेः सभां वेश्म प्रपद्ये' इत्युत्तरत्र ब्रह्मलोकस्य विशेषितत्वात्। प्रजापतिशब्दस्य चतुर्मुखवाचित्वात्। शब्दशक्तिमहिम्नैव सर्वव्यवस्थाया अभ्युपेयत्वात्। अन्यथा विष्ण्वादिशब्दानामपि अर्थांतरपरत्वापत्त्या त्वदिष्टार्थासिद्धेः। स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभि-संपद्यते'। न च पुनरावर्तते इत्युत्तरवाक्यमपि चतुर्मुखलोकपरतया नेयम्। न च 'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन' इति चतुर्मुख-लोकंगतानां पुनरावृत्तिप्रतिपादनात् तस्यानित्यत्वेनाकृतत्वविशेषणा-

योगाच्च कथं उदाहृतश्रुतीनां चतुर्मुखलोकपरत्वमिति वाच्यम्। 'षड्गुणेन तपोलोकात् सत्यलोको विराजते। अपुनर्मारको यत्र ब्रह्मलोको हि स स्मृतः। 'पादगम्यं तु यत्किंचित् वस्त्वस्ति पृथिवीमयम्। स भूलोकः समाख्यातो विस्तरोऽस्य मयोदितः'। भूमिसूर्यांतरं यच्च सिद्धादिमुनिसेवितम्। भुवर्लोकस्तु सोऽप्युक्तो द्वितीयो मुनिसत्तम। ध्रुवसूर्यांतरं यच्च नियुतानि चतुर्दश। स्वर्लोकः सोऽपि गदितो लोकसंस्थानचिंतकैः। त्रलोक्यमेतत्कृतकं मैत्रेय परिपठ्यते। जनस्तपस्तथा सत्यमिति चाकृतकं त्रयम्। कृतकाकृतयोर्मध्ये महर्लोक इति स्मृतः। शून्यो भवति कल्पांते योऽत्यंतं न विनश्यति। एते सप्त मया लोका मैत्रेय कथितास्तव। पातालानि च सप्तैव ब्रह्मांडस्यैष विस्तरः'॥ इत्यादिभिः श्रीविष्णुपुराणवचनैः (२ अं. ७ अ. श्लो. १५-२१) चतुर्मुखलोकं प्राप्तानामपुनरावृत्तेस्तल्लोकस्याकृतकत्वस्यचोक्तेः। न च गीतावचनविरोधः। तस्य मेरूपरिविद्यमानब्रह्मभवनविषयत्वात्। तस्य च कर्मप्राप्यत्वेन पुनरावृत्त्युपपत्तेः। तथा च श्रीविष्णुपुराणवचनम्।

चतुर्दशसहस्राणि योजनानां महापुरी।
मेरोरुपरि मैत्रेय ब्रह्मणः प्रथिता दिवि॥ इति।

(अं. २ अ. २ श्लो. ३०)

अकृतत्वमपि न नित्यत्वरूपम्। किंत्वाभूतसंप्लवावस्थायित्वरूपम्। 'आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते इत्यादिवचनात्। एवं यो वा एतामेवं वेदापहत्य पाप्मानमनन्ते (तलवकार) स्वर्गे लोके ज्येये प्रतितिष्ठतीति तलवकारश्रुतावपि स्वर्गलोकश्चतुर्मुखलोक एव प्रसिद्ध स्वर्गलोको वा। न ह्यत्र ब्रह्मज्ञानफलतया स्वर्गलोकप्राप्तिरुक्ता। किंतु 'ब्राह्मीं वाव त उपनिषदमब्रूम' इत्युपनिषदमुपक्रम्य 'तस्यै तपो दमः कर्मेति प्रतिष्ठा वेदाः सर्वांगानि सत्यमायतनं यो वा एतामेवं वेद' इत्युपनिषदिति तपः प्रभृतीति प्रतिष्ठात्वौपासनफलतया च न विरोधः। 'अस्मात् शरीरभेदादूर्ध्वं उत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽऽमृतः समभवत् इत्यैतरेयवाक्यमपि क्रममुक्तिपरम्। एवं मुक्तस्य गतिप्रतिपादकश्रुत्यंतराण्यपि नेयानि। मुक्तस्य गतिनिषेध-

पूर्वकमत्रैव मुक्त्युक्तेः। तथा च श्रुतिः। 'अथाकामयमानो योऽकामो निष्काम आप्तकामः आत्मकामो न तस्य प्राणा उत्क्रामन्ति, ब्रह्मैव सन् ब्रह्माप्येति उदस्मात्प्राण उत्क्रामन्तीत्याहो नेति नेति होवाच याज्ञवल्क्यः। अत्रैव समवलीयन्ते यदा सर्वे प्रमुच्यंते कामा येऽस्य हृदि श्रिताः। अथ मर्त्योऽमृतो भवति अत्र ब्रह्म समश्नुत इत्यादिका बृहदारण्यके प्रसिद्धैव। तथोत्तरतापनीयेऽपि तस्मादात्मानमेवैवं जानीयात् आत्मैव नृसिंहो देवो। परमेव ब्रह्म भवति य एवं वेद। सोऽकामो निष्कामः आप्तकामः आत्मकामो न तस्य प्राणा उत्क्रामंति, अत्रैव समवनीयंते ब्रह्मैव सन् ब्रह्माप्येति य एवं वेदेतीति ह प्रजापतिरुवाचेति (नृ. उ. ता. उ.) गतिनिषेधः प्रतिपादितः। न च प्राणानामेव गतिनिषेधः श्रुतः। न तु मुक्तात्मन इति युक्तम्। मुक्तात्मगत्यभावप्रतिपत्त्यर्थतयैव तदुक्तेः। अन्यथा तद्वैयर्थ्यात्।

किंच 'अथातोऽनुप्रश्नाः' उताविद्वानमुंलोकं प्रेत्य कश्चन गच्छति आहो विद्वानमुं लोकं प्रेत्य कश्चित् समश्नुता उ इति श्रुतौ मुक्तस्य गत्यभावपक्ष एव स्वीकृत इति गम्यते। तस्यैवाव्यवहितत्वात्। प्रथमपक्षस्य व्यवहितत्वेनांगीकारार्थकोंकारविषयत्वायोगात्। ऊइति दीर्घस्य अथासपत्नान् गच्छतीत्यादाविव छांदसत्वेन प्रथमप्रश्नस्यापि विद्वद्विषयत्वात्। यदाह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विंदते। अथ सोऽभयं गतो भवतीत्युत्तरत्र द्वितीय प्रश्नविषयस्यैवोपपादनात्। तत्र ज्ञानमोक्षयोरेककालीनत्वप्रतिपादनात्। अथशब्दस्य तदेत्यर्थपरत्वात्। 'स एवं विदस्माल्लोकात्प्रेत्य' इत्यादेर्व्यवहितत्वेनोक्तप्रश्नोत्तरत्वायोगाच्च। त्वयाप्यत्रैव "केचिन्मुच्यन्ते नोत्क्रामन्ति कदाचने"ति वदता अनुत्क्रान्तिपक्षस्याप्यभ्युपगमाच्च। एवं भारतवचनेऽपि मुक्तप्राप्यस्य विष्णुलोकस्य बहुकालावस्थायित्वमेव प्रतिपाद्यत इति न तैरपि मुक्तप्राप्यनित्यलोकसिद्धिरङ्गीकार्येति।

किं च त्वयाऽपि स एनान् ब्रह्म गमयतीत्यादौ ज्ञानिप्राप्यं ब्रह्म हिरण्यगर्भोऽपीत्यङ्गीकारेण सर्वत्रापि चतुर्मुखस्यैवार्चिरादिगतिप्राप्यत्वमस्तु। अर्धजरत्याश्रयणायोगात्। 'कार्यं बादरिरस्य गत्युपपत्तेः'

(ब्र.सू. ४-३-७) इति सूत्रे 'अप्रतीकालम्बनान्नयतीति बादरायणः उभयथा च दोषात् तत्क्रतुश्च' (ब्र. सू. ४-३-१५) इति सूत्रे च चतुर्मुखस्यार्चिरादिगतिप्राप्यत्वसमर्थनात्। तस्मान्मुक्तस्य गतिप्रतिपादकं शास्त्रं सर्वमपीदं मुक्त्यभिप्रायमिति न किञ्चिदनुपपन्नमिति।

अत्रोच्यते। अर्चिरादिगतिप्राप्यो लोकश्चतुर्मुखलोक इति नाङ्गीकार्यम्। तलवकारसाम्नि सप्तमो ब्रह्मलोक इत्युपक्रम्य प्रवृत्तेः। 'इतःपरस्मात् पर उत्तरस्मात्, परस्तृतीयादथ वा चतुर्थात्। सहस्रस्थूणेविमिते दृढ उग्रे यत्र देवानामधि देव आस्ते इति चतुर्मुखलोकात् तस्य परत्वश्रवणात्। याज्ञवल्क्यस्मृतौ॥

ऊर्ध्वं मे कः स्थितस्तेषां यो भित्वा सूर्यमण्डलम्।
ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम्॥

इति मुक्तस्य ब्रह्मलोकातिक्रमोक्तेः। ब्रह्मणः सदनात्तस्य परं स्थानं प्रकाशते। देवा अपि यन्न पश्यन्ति दिव्यतेजोमयं शिवम्। अत्यर्कानलदीप्तं तत् स्थानं विष्णोर्महात्मनः॥ इत्यारण्यपर्वणि।

ब्रह्मणः सदनादूर्ध्वं तद्विष्णोः परमं पदम्।
—इति मुद्गलोपाख्याने च॥

मुक्तप्राप्यविष्णुलोकस्य चतुर्मुखलोकात्परत्वोक्तेश्च।

'आब्रह्मभुवनाल्लोकाः पुनरावृत्तिनोऽर्जुन।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते॥
(भ.गी. अ. ८, श्लोक १६)

इति चतुर्मुखलोकं प्राप्तानां पुनरावृत्तिप्रतिपादनात् अर्चिरादिप्राप्यलोकस्यापुनरावृत्तिप्रतिपादनेन च भिन्नत्वावश्यम्भावाच्च। आङोऽभिविध्यर्थत्वे अनन्यथासिद्धप्रमाणाभावेन मर्यादार्थत्वस्यैवाङ्गीकर्तव्यत्वाच्च। न च महामेरुस्थितब्रह्मभवनविषयं गीतावचनमिति युक्तम्। तथा सङ्कोचे कारणाभावात्। ननु विष्णुलोकस्य ब्रह्मलोकात्परत्वाङ्गीकारे विष्णुपुराणवचनविरोधः।

तत्र—

"ऊर्ध्वोत्तरं ऋषिभ्यस्तु ध्रुवो यत्र व्यवस्थितः ।
एतद्विष्णुपदं दिव्यं तृतीयं व्योम्नि भास्वरम् ॥
(निर्धूत) निरुद्धदोषपङ्कानां यतीनां संयतात्मनाम् ।
स्थानं तत्परमं विप्र पुण्यपापपरिक्षये ॥
अपुण्यपुण्योपरमे क्षीणाशेषार्तिहेतवः ।
यत्र गत्वा न शोचन्ति तद्विष्णोः परमं पदम् ॥
दिवीव चक्षुराततं योगिनां तन्मयात्मनाम् ।
विवेकज्ञानदृष्टं च तद्विष्णोः परमं पदम् ॥
धर्मध्रुवाद्यास्तिष्ठन्ति यत्र ते लोकसाक्षिणः ।
तत्सार्ष्ट्योत्पन्नयोगेद्धाः तद्विष्णोः परमं पदम् ॥
यत्रोतमेतत्प्रोतं च यद्भूतं सचराचरम् ।
भाव्यं च विश्वं मैत्रेय तद्विष्णोः परमं पदम् ॥
यस्मिन् प्रतिष्ठितो भास्वान् मेधीभूतस्त्वयं ध्रुवः ॥

इत्यादिना सप्तर्षिमण्डलादूर्ध्वं यत्र ध्रुव उपस्थितस्तत्रैव विष्णुलोकस्योक्तिरिति चेन्न। तस्य लोकस्य ध्रुवप्रीत्यर्थं विष्णुना कल्पितत्वेन अर्चिरादिप्राप्यविष्णुलोकान्यत्वात्। "ब्रह्मणः सदनादूर्ध्वं तद्विष्णोः परमं पदम्" इति भारतवचनस्यैव तथा कल्पकत्वात्। अन्यथा तद्विरोधापत्तेः। न च विष्णुलोकस्यापि कार्यत्वमिति शङ्क्यम्। पूर्वोदाहृतभारतवचनेन तन्नित्यत्वसिद्धेः। न च बहुकालावस्थितत्वरूपमेव तन्नित्यत्वमिति युक्तम्। मुख्यनित्यत्वाङ्गीकारे बाधकाभावात्। अन्यथा आत्मादिनित्यत्वमपि तथा स्यात्। न च कृतहानादिप्रसङ्गेन आत्मादिनित्यत्वं मुख्यं लोकविशेषस्य नित्यत्वानङ्गीकारे च न किमपि बाधकमिति वाच्यम्। विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति' इत्यादिश्रुत्याऽऽत्मविनाशस्य प्रतिपन्नत्वेन कृतहानादिप्रसङ्गस्य सह्यत्वादविनाशी वा अरेऽयमात्मेत्याद्युत्तरवाक्यानुसारात् 'न जीवो म्रियते' इत्यादिवाक्यान्तरानुसाराच्च विनाशित्वप्रतिपादनमन्याभिप्रायमिति चेत्। भ्रान्तोऽसि। लोकविशेषस्य नित्यत्वप्रतिपादनवत् आत्मनित्यत्व-

प्रतिपादनस्यापि बहुकालावस्थायित्वरूपगौणनित्यत्वप्रतिपादनपरत्वमस्त्विति वदन्तं प्रति तथोक्त्ययोगात्। प्रत्युत मुक्तप्राप्ये लोके अनित्यत्वसाधकमानाभावेन मुख्यनित्यत्वस्यैवाभ्युपगन्तव्यत्वाच्च। न च लोकत्वादिहेतुना तदनित्यत्वसिद्धिः। तदसिद्धावाश्रयासिद्धेः। तत्सिद्धौ च बाधात्। तस्योदाहृतश्रुतिस्मृतिभिर्नित्यत्वेनैव सिद्धेः। अन्यथा आत्मादेरपि ज्ञेयत्वादिना अनित्यत्वजडत्वादिकमपि स्यादिति यत्किञ्चिदेतत्।

किं चार्चिरादिगतिप्राप्यो लोकश्चतुर्मुखलोक इति कुतोऽभ्युपगम्यते। किं परब्रह्मणः सर्वगतत्वेन नित्यप्राप्तत्वेन गत्यनपेक्षत्वात्। किं वा मुक्तस्य गतिनिषेधात्। यद्वा ब्रह्मीभावस्यैव मुक्तितया तत्सिद्धये गत्यनपेक्षणात्। अथवोक्तात्सर्वस्मादपि। नाद्यः। परब्रह्मणः सर्वगतत्वेऽपि शास्त्रबलेन देशविशेषावच्छेदेन तत्प्राप्तेरभ्युपेयत्वात्। अन्यथा तत्प्रतिपादनवैयर्थ्यस्योक्तत्वात्। न द्वितीयः। मुक्तौ साक्षाद्गतिनिषेधकवाक्यस्यादर्शनात्। "यत्रायं पुरुषो म्रियते उदस्मात् प्राणा उत्क्रामन्ति आहो नेति नेति होवाच याज्ञवल्क्योऽत्रैव समवनीयन्ते इत्यार्तभागप्रश्नोत्तरस्याविद्वद्विषयत्वेन तत्र प्रश्नोत्तरयोः प्राणनिष्क्रमणनिषेधसिद्धजीवावधिकाभिप्रायत्वात्। जीवस्य प्राणानां च सहोत्क्रमणप्रतिपादनपरत्वाच्च। तथा च श्रुतिः। "तमुत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति" इति (काण्व ?) जनकयाज्ञवल्क्यसंवादस्य विद्वद्विषयत्वेऽपि न तस्मात्प्राणा उत्क्रामन्तीति माध्यन्दिनपाठानुसारेण प्राणोत्क्रमणनिषेधपरस्य जीवावधिकत्वविषयत्वकल्पनात्। "नामरूपाद्विमुक्तः। परात्परं पुरुषमुपैति दिव्यमिति श्रुत्यंतरानुसारेण तथैव कल्पनीयत्वात्। न चैवं यदा सर्वे प्रमुच्यंते कामा येऽस्य हृदि स्थिताः। अथ मर्त्योऽमृतो भवति अत्र ब्रह्म समश्नुते (कण्ठक. २–३–१४) इत्युत्तरवाक्यविरोध इति वाच्यम्। तस्योपासनकालीनगौणामृतत्वरूपब्रह्मानुभवप्रतिपादनपरत्वेन विरोधाभावात्। त्वयापि कर्तृकर्मविरोधेन तथैवाभ्युपगंतव्यत्वात्। एतेन न तस्य प्राणा उत्क्रामन्तीति उत्तरतापनीय वाक्यमपि

व्याख्यातम्। उताविद्वानमुं लोकं प्रेत्येति तैत्तिरीयेऽपि प्रश्नस्य मोक्षे आनंदानुभवतद्भावविषयत्वेन गतितद्भावाविषयत्वात्। रसं ह्येवायं लब्ध्वानन्दीभवति एषह्येवानन्दयातीत्यानंदानुभवस्य प्रतिपादनात्। तस्मान्नमुक्तस्य क्वापि गतिनिषेधः।

नापि तृतीयः। जीवस्य ब्रह्मीभावो मोक्ष इत्यस्य पूर्वमेव दूषितत्वात्। अत एव न चतुर्थोऽपि। तस्मादनुपपत्यभावादर्चिरादिगति प्राप्यो लोकोऽनित्याच्चतुर्मुखलोकात् भिन्नो नित्यश्चाभ्युपगंतव्यः। अस्तु वा मुक्तानां गतिनिषेधः। "अत्रैव केचिन्मुच्यन्ते नोत्क्रामंति कदाचनेति" (गरुडपुराणे) तथाविधानां मुक्तानां अस्माभिरंगीकारादिति।

किं च कौषीतकीनामुपनिषदि 'स एष विसुकृतो विदुष्कृतो ब्रह्म विद्वान् ब्रह्मैवाभिप्रेति' इत्यर्चिरादिगतिप्राप्ये ब्रह्मणि नपुंसकब्रह्मशब्दोऽपि श्रुत इति न तस्य चतुर्मुखरूपत्वम्। विरजां, नदीं, इति ईल्यवृक्षादीनां प्रतिपादनेऽपि न कश्चिद्दोषः। एतेषामत्यंतविलक्षणत्वात्। मानांतरविरोधाभावे शास्त्रसिद्धस्यार्थस्य सर्वस्याप्यंगीकार्यत्वात्।

कावेरी विरजातोयं वैकुण्ठं रंगमंदिरम्।
स वासुदेवो रंगेशः प्रत्यक्षं परमं पदम्॥

इति कावेर्यादेर्विरजातोयत्वादिना निरूपणदर्शनाच्च। अन्यथा चतुर्दशभुवनांडतद्बहिरावरणादीनामप्यनंगीकार्यत्वं स्यात्। एवं छांदोग्यबृहदारण्यकादिगतान्यार्चिरादिगतिप्रतिपादकवाक्यांतराण्यपि नित्यविष्णुलोकप्रतिपादनपराणीति स्थितम्। तस्माच्चतुर्मुखशिवलोकाद्यपेक्षयाप्यूर्ध्वं विद्यमानः शाश्वतो विष्णुलोक एव मुक्तप्राप्य इति स्थितम्।

ननु शिवधर्मोत्तरादिषु,

ज्ञेयं विष्णुपदादूर्ध्वं दिव्यं शिवपदं महत्।
भोगसंस्थानमतुलं कर्मयोगरतात्मनाम्॥

इति विष्णुपदादूर्ध्वं कर्मप्राप्यं शिवलोकमुक्त्वा,

'ऊर्ध्वं शिवपुरात् ज्ञेयं स्थानत्रयमनुत्तमम् ।
नित्यं परमशुद्धं च स्कंदोमाशंकरात्मकम् ॥
ये संप्राप्ताः परं स्थानं ध्यानयोगरता नराः ।
न तेषां पुनरावृत्तिर्घोरे संसारमण्डले ॥

इत्यादिना विष्णुलोकस्य कर्मप्राप्यशिवलोकादधस्तनत्वस्य सर्वोत्तमपरमशिवलोकस्यैव मुक्तप्राप्यत्वस्य च प्रतिपादनात् कथं विष्णुलोकस्य परमत्वमुपपद्यते । तदपेक्षया परस्य शिवलोकस्य मुक्तप्राप्यत्वेऽपि न दोषः । ततः परस्य वैकुंठस्यापि मुक्तप्राप्यत्वोपपत्तेः । न चैवं विरोधः । क्रमेण तदुभयोपपत्तेरिति चेन्न । चतुर्मुखलोके मुक्तप्राप्यत्वस्यापुनरावृत्तिश्चैवमेवाभ्युपगंतव्यत्वात् । न च विष्णुलोकप्राप्त्यनंतरं शिवलोकप्राप्तिरिति वैपरीत्यं शंक्यम् । शिवापेक्षया विष्णोरेवोत्कृष्टत्वस्य पूर्वमेव प्रतिपादितत्वेन तथाविधशंकानुदयात् ।

'सायुज्यानां विशिष्टे द्वे मामकं वैष्णवं तथा ।
मां प्राप्य न निवर्तंते विष्णुं वा शुभलोचने ॥

इति भारतवचनमपि अस्मदभिमतक्रमप्राप्तिपरम् । तत्र पाठक्रमानुसारेण पूर्वं शिवलोकप्राप्तिरनंतरं विष्णुलोकप्राप्तिरिति अर्थस्याश्रयणीयत्वात् । पाठक्रमस्यापि क्रमनियामकत्वात् । सति संभवे त्यागायोगात् । न हि प्रकृते पाठक्रमस्य त्यागे किंचित् बाधकमस्ति । तस्मात् विष्णुलोकस्यैव सर्वोत्तमत्वमर्चिरादिमार्गेण मुक्तप्राप्यत्वं चेति स्थितम् ।

ननु अर्चिरादिमार्गः श्रुतिष्वनेकधा श्रूयत इति तस्य ब्रह्मप्राप्तौ विकल्पस्स्यान्न च स युज्यते तस्याष्टदोषदुष्टत्वात् इति चेन्न । तत्र श्रुत्यर्थपाठाद्यनुसारेण गुणोपसंहारन्यायेन सर्वशाखाप्रत्ययन्यायेन अर्चिरादिमार्गस्य एकरूपत्वोपगमात् । एतावांस्तु भेदः । ज्वलनदिवसज्योत्स्नापक्षोत्तरायणवत्सरान् । पवनतपनप्रालेयांशून्यक्रमादचिरचिर्तिं जलचरपतिं देवाधीशं प्रजापतिं आगतस्तरति विरजारेवाचस्ततः परमाद्भुतमित्येवं रूपः क्रमः परैरुपेयते अस्माभिस्तु "उत्क्रांतस्तुशरीरत्वात् गच्छत्यर्चिषमेवतु । ततो हि वायोः पुत्रं च योऽसौ

नाम्नाऽऽतिवाहिकः। ततोऽहः पूर्वपक्षंचाप्युदक्संवत्सरं तथा। तटितं वरुणं चैव प्रजापं सूर्यमेव च। सोमं वैश्वानरं चेन्द्रं ध्रुवं देवीं दिवं तथा। ततो वायुं परं प्राप्य तेनैति पुरुषोत्तमं" इति ब्रह्मतर्कवचनानुसारेण प्रकारान्तरेण अयमभ्युपगम्यते। युक्तं च तथा अस्मदभिमतक्रमस्य सर्वज्ञभगवद्व्यासप्रणीतब्रह्मतर्कवचनसिद्धत्वात्। अर्वाचीनपुरुषबुद्धिकल्पितमार्गक्रमस्य त्याज्यत्वात्। तस्मादर्चिरादिमार्गेण ब्रह्मप्राप्तस्य मुक्तस्य स्वानंदानुभवमोक्षः। न तु निर्विशेषब्रह्मभाव इति स्थितम्।

किं च निर्विशेषस्य ब्रह्मणः कथं जगत्कारणत्वं ज्ञानचिकीर्षाकृतीनां कर्तृत्वप्रयोजकत्वात्। निर्विशेषे तदभावात् ज्ञानचिकीर्षाकृतयः कल्पिताः संतीति चेन्न। कल्पनायास्तु सर्वत्र सुलभत्वेनातिप्रसंगात्। तेषां कल्पितत्वे "स्वाभाविकी ज्ञानबलक्रियाचेति श्रुत्या (श्वेताश्व अ. ६ मं. ८) धर्मिसमसत्ताकत्वरूपस्वाभाविकत्वोक्तिविरोधापाताच्च। ब्रह्मणः कर्तृत्वमिच्छता स्वसमानस्वभावज्ञानचिकीर्षाकृत्यादिकं वक्तव्यमिति न तन्निर्विशेषत्वसिद्धिः। निर्विशेषत्वे च न कर्तृत्वसिद्धिः इत्युभयतः पाशारज्जुः। नचेश्वरस्य कर्तृत्वं निर्विशेषस्य तु उपादानत्वमिति वाच्यम्। अभिन्ननिमित्तोपादानं तद्ब्रह्मेति त्वन्मतहानेः वास्तवाभेदमादाय अभिन्ननिमित्तोपादानत्वव्यवहार इति चेन्न। त्वयैव प्रत्यधिकरणं वास्तवाभेदे विद्यमानेऽपि व्यावहारिकभेदमंगीकृत्यैव तत्तद्विषयवाक्यानां जीवातिरिक्ते ईश्वरे समन्वयस्य अंगीकृतत्वेन अत्रापि व्यावहारिकव्यवस्थायाः अभ्युपेतत्वात्। अन्यथा सर्वसंकरापत्तेः। "जीव ईशो विशुद्धा चिदिति" चैतन्यत्रैविध्यस्य प्रमाणसिद्धव्यवस्थाया अंगीकृतत्वेन तत्यागायोगात्। न च ईश्वरस्यैव कर्तृत्वं उपादानत्वं चेति वाच्यम्। निर्विशेषमेव ब्रह्म जगदुपादानमिति त्वन्मतहानेः। ईश्वरस्यापि त्वन्मते कल्पितत्वेन उपादानत्वायोगाच्च।

किं च निर्विकारस्य ईश्वरस्य कथमुपादानत्वम्। तस्य कूटस्थनित्यत्वात्। न च मायाद्वारकं तस्योपादानत्वं न साक्षात्, एवं च न निर्विकारश्रुतिविरोध इति वाच्यम्। तथा सति मायाया एवोपादा-

नत्वमुक्तं न तु तदवच्छिन्नब्रह्मणः। एवं च मायां तु प्रकृतिं विद्यात् इति श्रुतिरपि (श्वेताश्व. अ. ४ मं. १०) अनुकूलिता भवति।

ननु शुद्धं ब्रह्मैव उपादानम्। न च निर्विकारश्रुतिविरोधः। वियदादिकार्यप्रपंचस्य मिथ्यात्वोपगमात्। कल्पितविकारस्य वास्तवनिर्विकारत्वाविरोधित्वात्। कल्पितस्य स्फटिकलौहित्यस्य (तच्छुभ्रत्वाविरोधित्वदर्शनात्) वास्तवस्फटितस्वरूपविरोधादर्शनात्। एवं च ब्रह्मणो वियदादिकार्यात्मना परिणम्यमानत्वेन उपादानत्वाभावेऽपि वियदाद्यात्मना विवर्तमानत्वेन उपादानत्वं युक्तम्। शुक्त्यादेः रजतात्मना विवर्तमानत्वदर्शनात्। न च परिणामविवर्तयोरभेदः। तात्त्विको अन्यथाभावः परिणामः अतात्त्विकः अन्यथाभावः विवर्त इति तयोर्भेदात्। वेदांतिभिः वियदादेः ब्रह्मविवर्तत्वस्यैव उपगमात्। अत एव वेदांतवादस्तु विवर्तवाद इति उद्घोषः। इति। मैवम्। ब्रह्माधीनोत्पत्तिस्थितिनाशस्य वियदादिप्रपंचस्य अतात्त्विकत्वाभ्युपगमस्य पारिभाषिकत्वात् अनित्यत्वपर्यवसन्नत्वाच्च। अतात्त्विकत्वे उत्पत्त्यादेः उत्पन्नत्वे च अतात्त्विकत्वस्यायोगाच्च। न च अतात्त्विकस्य शुक्तिरूप्यादेः उत्पत्त्यादिकमिव तथाभूतवियदादेरप्युत्पत्त्यादिकं युक्तमिति वाच्यम्। सिद्धमसिद्धेन बोधयतो महानैय्यायिकत्वमिति न्यायापातात्।

किं च परमते शुक्तिरूप्यादिदृष्टांतेन जगन्मिथ्यात्वसाधनमनुपपन्नम्। उत्पत्तिस्थितिनाशादियुक्तस्य जगतो अत्यंतासतः शुक्तिरूप्यादेश्चात्यंतवैलक्षण्यात्। ननु शुक्तिरूप्यादिकं उत्पद्यते। तथाहि। इदं रजतमिति भ्रमस्थले प्रतीयमानं तावद्रजतं नासत्। असतोऽपरोक्षप्रतीतिविषयत्वस्य क्वाप्यनुपलंभात्। दोषमहिम्ना असतोप्यपरोक्षप्रमिति (प्रतीति) विषयत्वं युक्तमिति चेन्न। असतः कथमपरोक्षप्रमितिविषयत्वमिति वदंतं प्रति प्रमितकार्यकल्प्यदोषेण तदुपपादनायोगात्। न च बाधावतारदशायां नास्ति नासीत् न भविष्यतीति प्रतीत्या त्रिकालसर्वदेशीयनिषेधप्रतियोगित्वरूपासत्त्वस्य शुक्तिरूप्येऽवगाहनात् असदेव तत् रजतमिति वाच्यम्। तथा प्रतीतेः मिथ्याभूतानिर्वचनीयरजतोत्पत्त्याद्यबाधकत्वात्। प्रतिपन्नरजतेऽत्यंतासत्वानापादक-

त्वाच्च। अन्यथा त्वन्मते दर्पणे मुखं नास्ति नासीन्न भविष्यतीति प्रतीत्या तत्र प्रतिपन्नस्य मुखस्यात्यन्तासत्वं स्यात्। उत्पत्तिश्चनांगीकार्या स्यात्। एतावांस्तु विशेषः त्वया दर्पणे मुखमित्यादौ प्रतिबिम्बोत्पत्तिरंगीकृता। प्रतिबिम्बस्य सत्यत्वं चांगीकृतम्। माया तु इदं रजतमित्यत्र अनिर्वचनीयरजतोत्पत्तिरंगीकृता। त्वया दर्पणे मुखमित्यादौ प्रतिबिंबोत्पत्तिः अंगीकृता। रजतावयवादिरूपक्लृप्तरजतोत्पत्तिसाग्रयभावे कथं रजतोत्पत्तिरिति शंका च प्रतिबिंबोत्पत्तिप्रतिबंद्या निरस्ता। तस्मात्प्रतिपन्नं शुक्तिरूप्यादिकं नासत्। नादि सत्। सतो बाधायोगात्। अस्य च बाधितत्वात्। न च देशांतरस्थमेव प्रतीयते इति युक्तम्। तस्य चक्षुरसन्निकृष्टत्वेन चाक्षुषज्ञानविषयत्वायोगात्। न च तत्र दोषः सन्निकर्षः। अक्लृप्तत्वात्। नापि ज्ञानलक्षणः सन्निकर्षः। अक्लृप्तत्वादेव अन्यथा व्यवहितवह्न्यादेरपि पर्वतादौ चाक्षुषत्वापातात् तदुक्तप्रकारेण प्रत्यक्षसामग्र्याः पुष्कलत्वात् न च तत्र अनुमितिसामग्र्या प्रत्यक्षसामग्र्याः प्रतिबंधः। स्थाणुपुरुषादिसंशयानंतरं करादिविशेषदर्शने सति पुरुषत्वाद्यनुमित्यापत्तेः तत्प्रत्यक्षानापत्तेश्च। न च अलौकिकप्रत्यक्षसामग्र्यपेक्षयैव अनुमितिसामग्री प्रबलेति नोक्तदोष इति वाच्यम्। भ्रमरूपविशेषदर्शनानंतरं शुक्तिरूप्यादिप्रत्यक्षानापत्तेः। तदनुमित्यापत्तेश्च। अलौकिकप्रत्यक्षसामग्र्यपेक्षया प्रमारूपानुमितिसामग्र्येव प्रबलेति चेत्। तर्हि धूळीपटलादौ वह्निव्याप्यधूमभ्रमानंतरं वह्न्यादिप्रत्यक्षमेव स्यात्। न तु तदनुमितिरिति आस्तां तावत्। तस्मात् भ्रमस्थले देशांतररजतापरोक्षसामग्र्यभावेनानिर्वचनीयरजताद्युत्पत्तिः अंगीकर्तव्येति।

अत्रोच्यते। भ्रमस्थले रजताद्युत्पत्तिः किमनुभवबलात् अभ्युपगम्यते किं वा अन्यथा अनुपपत्त्या। नाद्यः तदुत्पत्तेः अननुभूयमानत्वात्। अनुभवे विवदमानस्य उन्मत्तवत् उपेक्षणीयत्वात्। द्वितीये तदुत्पत्त्यभावे किमनुपपन्नम्। न तावदपरोक्षप्रतीतिविषयत्वम्। भूतले घटो नास्ति इति प्रतियोगिविशिष्टाभावप्रत्यक्षस्य दर्शनात्। पुरोदेशस्थतया अपरोक्षप्रतीतिविषयत्वमिति चेन्न। सूर्यादीनां उदयादि-

काले उत्पत्तिं विनापि पुरोदेशस्थतया अपरोक्षप्रतीतिविषयत्वदर्शनेन तस्य तदकल्पकत्वात्। पूर्वं अविद्यमानस्य तथा परोक्षप्रतीतिविषयत्वमेव तत्कल्पकम्। सूर्यादेस्तु "हिरण्ययेन सविता रथेनादेवो याति भुवनानि पश्यन् (          ) इत्याद्यागमानुसारेण पूर्वं विद्यमानस्यैव अभिव्यक्तिरिति चेत्। कथं शुक्तिरूप्यं पूर्वं अविद्यमानमिति भवता निश्चितम्। योग्यानुपलब्धेरिति चेन्न। तावतापि तदुपत्यसिद्धेः समयविशेषसंसर्ग्यत्यंताभावरूपत्वेनापि पूर्वं तदविद्यमानत्वस्योपपन्नत्वात्। देशांतरस्थं रूप्यं भ्रमकाले पुरोदेशे केनानीयते इति चेन्न। उत्पत्तिपक्षेप्येवं पर्यनुयोगसंभवात्। उत्पत्तिपक्ष इव आनयनपक्षेऽपि अविद्यादिरूपदोषमहिमा न काकभक्षिता। आनयनपक्षे तत् ज्ञानस्य भ्रमत्वं न स्यादिति चेन्न। उत्पत्तिपक्षेऽपि साम्यात् दोषप्रयुक्तभानत्वेन भ्रमत्वं चानयनपक्षेऽपि समानम्। शुक्तिरूप्यं केनचिदानीयमानं न दृश्यते इति चेत् तर्किं उत्पद्यमानं केनचिद्दृश्यते? कल्पनं चोभयत्र समानम्। न चानयनपक्षे पूर्वं तदुत्पादकसामग्री कल्पनीया। ततो वरं प्रतीतिकाल एव तस्या कल्पनमिति वाच्यम्। पूर्वं लब्धसत्ताकस्यैव उपलंभ इत्यस्य सार्वत्रिकत्वात्। तस्मात् शुक्तिरूप्योत्पत्त्यनंगीकारे न काप्यनुपपत्तिः। एतेन स्वाप्नपदार्थोत्पत्तिवत् प्रतिबिंबोत्पत्तिवच्च शुक्तिरूप्योत्पत्तिरप्यस्तु। अन्यथा तदुत्पत्तिरपि न सिध्येत् इति निरस्तम्। स्वाप्नदृष्टेः अथ रथान् रथयोगान् सृजते (बृ. उ. ६-३-१०) कामं कामं पुरुषो निर्मिमाण इत्यादि (कठ. अ. २, वल्ली २, मं ८) श्रुतिसिद्धत्वेन दुरपह्नवत्वात्। स्वाप्नपदार्थानामभावप्रतियोगित्वमात्रेण मिथ्यात्वानापत्तेः। प्रत्युत ईश्वरसृष्टत्वेन तत्सत्यत्वस्यैव दुर्वारत्वाच्च इत्यन्यत्र विस्तरः। प्रमाणमस्तीति चेत् प्रतिबिंबोत्पत्तिः अंगीक्रियताम्। तन्नास्तीति चेत् उत्पत्तिरपि मा भूत्। न तावता अस्माकं किंचिदनिष्टम्। शुक्तिरूप्योत्पत्त्यनंगीकारे तु जगन्मिथ्यात्वमेव न सिध्येत् इति त्वदनिष्टमापद्येत। तस्मात् शुक्तिरूप्योत्पत्तिसिध्यर्थं परेण यतितव्यम्। सा च न संभवतीत्युक्तम्। वस्तुतस्तु प्रतिबिंबोत्पत्तिः अंगीकार्या। तथाहि। न तावद्दर्पणे प्रतीयमानं मुखं ग्रीवास्थं तस्य

सर्वावयवावच्छेदेन चक्षुःसन्निकर्षाभावात्। न च दर्पणाभिहताद्दृष्टिः परावृत्यस्वमाननं व्याप्नुवन्ती आभिमुख्येन व्यत्यस्तं दर्शयेन्मुखमित्युक्तप्रकारेण तस्य चक्षुःसन्निकर्षोपपत्तिरिति वाच्यम्। स्वच्छजलादौ यत्र मुखादिप्रतिबिंबः तत्र नायनरश्मीनां प्रतिघाताभावात्। अन्यथा कूपाद्यंतर्गतवालुकाद्यग्रहणापातात् न च तत्र केषांचित् नायनरश्मीनां जलांतर्गमनेऽपि केषांचित् प्रतिहतिः अंगीक्रियत इति वाच्यम्। नायनरश्मीनां एकाकारतया तत्र द्विस्वभावत्वकल्पनायोगात्। बिंबप्रतिबिंबत्वाभिमतयोः रूपपरिमाणादिभेदेन देशभेदेन च भेदावश्यंभावेन परावृत्यग्रहणस्य अकल्पनीयत्वाच्च। न च ग्रीवास्थ एव मुखे श्यामिकावक्रत्वयोः दर्पणस्थत्वस्य च अध्यस्ततया न तदादाय धर्मिभेदसिद्धिः। अन्यथा अंगुल्यवष्टब्धचक्षुषा पुरुषेण प्रतीयमानयोः चन्द्रयोरपि भेदः स्यादिति वाच्यम्। परावृत्यग्रहणस्य दृष्टत्वेन अधिष्ठानज्ञानाभावेन धर्ममात्राध्यासः स्वरूपमात्राध्यासस्य सर्वत्राबाधितत्वायोगेन स्वरूपेणैवाध्यासस्य दुर्वारत्वात्। ननु प्रतिबिंबस्वरूपस्याध्यस्तत्वाभ्युपगमेन तदुत्पत्तिः न सिध्येत्। तव असत्ख्यातिवादित्वात् असतश्चोत्पत्त्यभावादिति चेत्। भ्रान्तोऽसि। न हि तथापादनं सिद्धांतरीत्या किंतु परावृत्यग्रहणमतरीत्येति न किंचिदनुपपन्नम्। वस्तुतस्तु दर्पणे प्रतीयमानं मुखं नाध्यस्तम्। अधिष्ठानाभावात्। अधिष्ठानासंभिन्नतया प्रतीयमानस्य अध्यस्तत्वात्। न चेदं संसर्गाध्यासमात्रं तस्य तादात्म्याध्यासपूर्वकत्वात्। अन्यथा भूतले घट इत्यादीनामपि अध्यासत्वापातात्। न च निरधिष्ठानोऽयं भ्रमः। तस्य साधिष्ठानत्वनियमात्। एवं च परिशेषात् प्रतिबिंबस्य ग्रीवास्थमुखस्वरूपत्वायोगात् अनध्यस्तत्वाच्च उत्पत्तिः अंगीकर्तव्येति। न चैवं ममैवेदं मुखं इति प्रतीत्यनुपपत्तिः। प्रतिमादौ मम देह इत्यादिप्रतीतिवत् तस्याः सादृश्यनिबंधनत्वात्। रूपपरिमाणादीनां वैलक्षण्यस्य स्फुटं प्रतिभासाच्च। नह्येवं शुक्तिरूप्याद्युत्पत्तौ किंचित्साधकमस्ति। दोषमहिम्ना असत्त्वेऽपि अपरोक्षप्रतीतिविषयत्वस्य उपपन्नतया तदुत्पत्याद्यसिद्धेः इति अन्यत्र विस्तरः। तस्मात् परमते जगन्मिथ्यात्वं अनुपपन्नम्।

किंच जगन्मिथ्यात्वे किं प्रमाणम्। एकमेवाद्वितीयं नेहनानेत्याद्या श्रुतय इति चेन्न। तासां तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृजत। यस्मिन् द्यौः पृथिवीचांतरिक्षं, आत्मन आकाशः संभूतः इत्यादि वाक्यांतरानुसारेण नेयत्वात्। अन्यथा व्याहतभाषित्वापत्तेः। न च अध्यारोपापवादन्यायेन निष्प्रपंचब्रह्मप्रतिपत्त्यर्थत्वं सप्रपंचवाक्यानां इति वाच्यम्। प्रक्षालनाद्धि पंकस्य दूरादस्पर्शनं वरं इति न्यायेन मात्रादिवत् परमहितैषिण्या श्रुत्या भ्रममुत्पाद्य तन्निषेधाय प्रवृत्त्ययोगात्। न हि माता स्वपुत्रादिभ्यो गरं दत्वा तन्निवृत्त्यर्थं औषधादौ प्रवर्तमाना दृश्यते। न च श्रुतिः जीवस्य स्वयं भ्रमं नोत्पादयति। किंतु तस्य स्वतः सिद्धभ्रमं निषेधाय अनुवदतीति वाच्यम्। तथा सति अध्यारोपापवादन्यायो दत्तजलांजलिः स्यात्। कर्मकाण्डार्थानां सगुणवाक्यार्थानां सृष्टिवाक्यार्थानां अर्चिरादिवाक्यार्थानां च श्रुत्यैकसमधिगम्यतया तदंशे अनुवादायोगाच्च। न कलंजं भक्षयेदित्याविव निषेध्ये श्रुतितात्पर्याद्यभावेन कर्मसगुणब्रह्मोपासनसृष्ट्यर्चिरादिगत्यादीनां असिद्ध्या तदननुष्ठानापत्तेश्च इति यत्किंचिदेतत्। तदभिमताज्ञानं च अन्यत्र निरस्तम्। एवं जगन्मिथ्यात्वसिध्यधीनं तन्मतसिद्धप्रक्रियान्तरमपि निरसनीयमिति दिक्॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां श्रीमत्सुरेन्द्रतीर्थपूज्यपादानां-शिष्येण सर्वतन्त्रस्वतन्त्रेण विजयीन्द्रभिक्षुणा विरचिते सर्वसिद्धांतसारासारविवेचने शङ्करमतभङ्गो नाम अष्टमः परिच्छेदः॥

---

# ॥ अथ यादवप्रकाशमतभङ्गः ॥

## इदानीं यादवप्रकाशमतं निराक्रियते ॥

इत्थं हि तन्मतम्। सर्वशक्त्युपेतं स्वप्रकाशं सन्मात्रं ब्रह्म। तच्च सांशम्। केनचिदंशेन ईश्वरात्मना परिणमते। केनचिदंशेन जीवात्मना। केनचित्प्रकृत्यात्मना। तत्र सन्मात्रं ब्रह्म निस्तरंगसमुद्रस्थानीयम्। तरंगस्थानीय ईश्वरः। बुद्बुदस्थानीयः पुरुषः[1] फेनस्थानीया प्रकृतिः। सदेव सोम्येदमग्र आसीत्, एकमेवाद्वितीयं, तदैक्षत, बहुस्यां प्रजायेयेत्यादि (छां. अ. ६, खं. २, मं. १, ३) श्रुत्या सन्मात्रब्रह्मण एव बहुभवनोक्तेः। ब्रह्मणस्तेषां च भेदोऽभेदश्च स्वाभाविकः। उभयोरपि श्रुतिप्रतिपन्नत्वात्। तत्र ईश्वरस्य मनोमयो वाङ्मयः प्राणमय इति त्रयोंशाः। ते च सत्वतमोरजःपरिणामभूताः मनःशब्देन प्राणरूपेण परिणताः संसारिणां उपकुर्वन्ति। प्राणमयोऽतर्यामीभूय स एव तत्वतदधिष्ठातृदेवताभिः सह कर्तृत्वं प्राप्नोति। कर्तृभूतजीवांतर्गतो मनोमयः जीवस्य कारयिता भवति। वाङ्मयस्तु सर्वत्र परिणमयिता। पुरुषस्तु सर्ववस्तुभोक्तृशक्तियुक्तः। तस्यैव व्यूहभूताः प्रतिशरीरं व्यवस्थिताः अणवोऽनंता जीवनामकाः संचरंति। तेषां ब्रह्मांशतया तत्र केषांचित् ब्रह्मगुणानां आवरणं केषांचिदनावरणं च। ते च जीवाः त्रिविधाः। सिद्धा बद्धा मुक्ताश्चेति। सिद्धाश्च द्विविधाः। आजानसिद्धा योगसिद्धाश्चेति। आजानसिद्धा ईश्वरस्योपकरणभूताः। योगसिद्धाः ईश्वरदत्ताणिमादिगुणाविर्भावाः। संसारिणो बद्धाः। बंधश्च त्रिविधः। प्रकृतिबंधो, वैकारिकबंधो दक्षिणाबंधश्चेति। पृथिव्याद्यष्टप्रकृतिसंपादितो बंधः प्रकृतिबंधः। तद्विकार(रि)शब्दादिसंपादितो बंधो वैकारिकः। कर्मकृतो बंधो दक्षिणाबंधश्चेति। एते च तुषादिवत् जीवमावेष्टय ब्रह्मगुणाविर्भावप्रतिबंधका भवन्ति। मुक्तास्तु आविर्भूतचतुर्गुणाः। (सत्त्वगुणाः) (सततगुणाः) ते च स्वेच्छया ईश्वराभिन्नाः तद्भिन्नाश्च भवंति।

---

1. जीवः

पुरुषेश्वरयोः स्वतः परिणामाभावेऽपि हेतुवशात् ज्ञानादिपरिणामयोगित्वमस्ति। प्रकृतिस्तु अचेतनभूता। सा च कालपरमाकाशाव्यक्तभेदेन त्रिविधा। कर्मफलदेशविशेषेषु भोक्तॄन् नियमयंती प्रकृतिः नियत्यवस्थापन्ना चतुर्विधा च भवति। परिस्पंदानां विशेषकारणं कालः। प्रळयकाले तप्तायःपिण्डांबुवदीश्वरेण एकतामापन्नायाः शक्त्यवस्थानरूपायाः मूलप्रकृतेः विभागव्यपदेशयोग्या अक्षरशब्दवाच्याद्यवस्था परमाकाशम्। अस्य शब्दपरिणामशक्तियुक्ततया वागक्षरशब्दवाच्यत्वं भवति। इदमीश्वरंप्रति प्रमेति व्यपदिश्यते। अस्यैव देशरूपत्वेन देशांतरानपेक्षत्वम्। परमात्मनोऽपि एतद्देशसंयोगेन ज्ञानप्रभा, आनंदप्रभा, क्रियाप्रभेत्येवं रूपाः प्रभाः संभवंति। ईश्वरानंदप्रभैव पुरुषेषु अभिव्यक्ता विषयसुखव्यपदेशं लभते। क्रियाप्रभातः प्राणरूपा, ज्ञानप्रभातः सत्त्वं, क्रियाप्रभातो रजः। वाक्शक्तितः तमश्च जायते। एतेषां सत्त्वादीनां पूर्वोक्तमनोमयादयोऽधिष्ठातारः। नचैवं विधप्रक्रियायां मानाभावः॥ "ईश्वराव्याकृतप्राणभूतैः सिंधुरिवोर्मिभिः यत्प्रनृत्यदिवाभाति तस्मै सत् ब्रह्मणे नमः" इति कात्यायनकारिकया अस्य सर्वस्य संगृहीतत्वात् इति। तदनुपपन्नम्। अत्र तावत् ब्रह्मणः सांशत्वं न संभवति। निष्कलं निष्क्रियं शांतं निरवद्यं निरंजनमित्यादि श्रुतेः (श्वेताश्व अ. ६, मं. १७)। न च तस्याः औपाधिकांशनिषेधपरत्वमिति युक्तम्। तथा संकोचे कारणाभावात्। न च पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतंदिवीत्यादि श्रुत्या (पु. सू.) ब्रह्मणः सांशत्वप्रतिपादनात् तथा संकोचः क्रियत इति वाच्यम्। अस्मिन् ग्रामे मम चतुर्थोऽश इत्यादाविव अत्रापि सर्वभूतानां ब्रह्मांशत्वस्य औपचारिकत्वात्। जडाजडयोः स्वाभाविकांशत्वायोगात्। योगे च सर्वसांकर्यापातात्। न च ब्रह्मणः निरंशत्वे "बहुस्यां प्रजायेयेति", "तदात्मानं स्वयमकुरुत", "सच्च त्यच्चाभवत्", "येनाश्रुतं श्रुतं भवति" "यथा सोम्यैकेन मृत्पिंडेन सर्वं मृण्मयं विज्ञातं स्यात्" (छां. अ. ६, मं. ३, ४) इत्यादि श्रुतिभिः ब्रह्मणो बहुभावस्य एकविज्ञानेन सर्वविज्ञानस्य मृदादिदृष्टांतानां च प्रतिपन्नतया तद्विरोधः स्यात्।

सांशत्वेतु तत्सर्वं उपपद्यते इति वाच्यम्। अंतर्यामिरूपेण बहुभवनस्योपपन्नतया ईश्वराव्यक्तरूपेण सांशत्वस्य सिध्यनुपपत्तेः नचांतर्यामिबहुत्वे तस्य सांशत्वमापन्नमिति युक्तम्। अनेकव्यक्त्यात्मकत्वरूपबहुत्वस्यैव सांशत्वप्रयोजकत्वात्। तस्य च परमात्मनि अनभ्युपगमात्। तस्य च एकव्यक्तिरूपत्वात्। न चैवं तत्र बहुत्वं पारिभाषिकं न तु वास्तवमिति युक्तम्। एकस्मिन्नपि ज्ञानस्वरूपत्वानंदस्वरूपत्वादेः विशेषणत्वविशेष्यत्वादेश्च भिन्नभिन्नस्य तत् स्वरूपरूपस्याभ्युपगमेन एकव्यक्तावपि बहुत्वस्य वास्तवस्य अंगीकर्तव्यात्। एकविज्ञानेन सर्वविज्ञानं च सर्वस्य ब्रह्मांशत्वाभावेऽपि संभवति। ब्रह्मज्ञानेन पुण्यपापादिनिवृत्तेः इव। सर्वविषयज्ञानोत्पत्तेरेव तत्र प्रतिपादनात्। न हि धूमादिज्ञानेन वह्न्यादि ज्ञायते इत्येतावता एकसंबंधिदर्शनेन अपरः संबंधि स्मर्यत इत्येतावता तत्रांशांशिभावो अभेदो वास्ति। तत्र संबंधिविशेषस्य नियामकत्वे प्रकृतेऽपि तथास्तु।

किं च सन्मात्रं ब्रह्मैवेश्वराव्याकृतपुरुषरूपेण परिणमत इत्ययुक्तम्। ब्रह्मणः कूटस्थनित्यत्वात्। कारणरूपमेकाकारं परं ब्रह्मेति तस्य सत्तैकैरेकरूपत्वप्रतिपादनात्। निष्क्रियमिति निर्विकारत्व "प्रतिपादनाच्च"। न चास्य कश्चित् जनिता न चाधिपः गौरनाद्यंतवती (मंत्रिकोपनिषत् मं. ५) न जायते म्रियते वा विपश्चित्, "अविकाराय शुद्धाय नित्याय परमात्मने। सदैकरूपरूपाय विष्णवे सर्वजिष्णवे॥" तदनंतरसंख्यातमसंख्यातप्रमाणकम्। नित्यः सर्वगतः स्थाणुः अचलोयं सनातनः (भ. गी. अ. २, श्लोक २४) इत्यादिश्रुतिस्मृतिभिः ईश्वराव्याकृतपुरुषाणां अनाद्यनंतत्वावेदनेन तेषां सन्मात्रब्रह्मविकारत्वायोगाच्च। जीवानां उत्पत्तिविनाशाभ्युपगमे कृतहानाकृताभ्यागमप्रसंगाच्च। न च परिणममानसन्मात्रब्रह्मानुवृत्या न कृतहानादिप्रसंग इति युक्तम्। तावन्मात्रस्य जीवशब्दार्थत्वाभावात्। जीवस्य च प्रळयादौ नष्टत्वात् सन्मात्रब्रह्मणोऽनुवृत्ततया जीवस्य च व्यावृत्ततया तयोरभेदायोगाच्च।

किं च ईश्वरातिरेकेणानुवृत्तब्रह्मसद्भावे मानाभावः। ईश्वरस्यैव सर्वजगत्कारणत्वात्। तस्यैव सर्ववेदान्तप्रतिपाद्यत्वात्। एतेन ईश्वरस्य मनोमयः वाङ्मयः प्राणमय इति त्रयोंशा इति निरस्तम्। मनोवाक्-प्राणशब्दार्थानां प्रसिद्धानां ईश्वराभिन्नांशत्वाभावात् । भिन्नांशत्वोपपत्तेश्च । तेषां तदभेदायोग्यार्थांतरत्वे च न काचित् क्षतिः। अस्माभिरपि संकर्षणादीनामीश्वरव्यूहरूपत्वाभ्युपगमात् । मनोमय-वाङ्मयप्राणमयाः सत्वतमोरजःपरिणामभूता इत्यसंगतम्। तेषां चेतन-तया तत्परिणामत्वायोगात्। अचेतनत्वे च ईश्वरव्यूहत्वायोगात्। एवं प्राणमयस्यांतर्यामितया कर्तृत्वं मनोमयस्य कारयितृत्वं वाङ्मयस्य परिणाम-यितृत्वं इति कल्पनं च प्रमाणाभावेनानादरणीयम् ।

किं च भोक्तृत्वशक्तियुक्तस्य पुरुषस्य व्यूहभूताः प्रतिशरीरं व्यवस्थिता-जीवा इत्ययुक्तम्। प्रतिशरीरं जीवानां भिन्नत्वात्। व्यूहशब्देन अभेद-विवक्षायां सुखदुःखादिव्यवस्थानुपपत्तेः। विकारविवक्षायां च कृतहानादि-प्रसंगात्। जीवत्रैविध्याद्युपपादनं तु नात्यंतविरोधि इत्युक्तम्। जीवाश्च स्वेच्छया ईश्वरभिन्नाः तदभिन्नाश्च भवंतीत्यनुपपन्नम्। प्रमाणाभावात्। न च "ब्रह्म वेद ब्रह्मैव भवति" (मुं. ३-२-९) "ब्रह्मविदाप्नोति परं" (तै. ब्र. वल्ली प्रथमानुवाकः) इत्यादिश्रुतिभिः मोक्षे भेदाभेदयोः उभयोरपि प्रतिपादनात् उभयसिद्धिरिति वाच्यम्। तथासति सर्वेषां वेदांतानां यथाश्रुतार्थपरत्वापातेन मीमांसावैयर्थ्यप्रसंगात्। कालपरमाकाशाव्यक्त-नियतिरूपेण मूलप्रकृतिचातुर्विध्यं चायुक्तम्। कालतत्वस्य प्रकृतितो अत्यंतभिन्नत्वात्। कालस्य सामान्यकारणत्वेन परिस्पंदं प्रति विशेष-कारणत्वोक्त्ययोगाच्च । मूलप्रकृत्यव्यवहितावस्थारूपपरमाकाशसद्भावे मानाभावाच्च। महत्तत्वस्यैव मूलप्रकृत्यव्यवहितावस्थात्वात्। महत एव परमाकाशशब्दवाच्यत्वाभ्युपगमे न नो हानिः। परमाकाशस्य ईश्वर-प्रभात्वपरिभाषायाः न किंचित् प्रयोजनम्। परमात्मनः परमाकाश-

संबंधेन ज्ञानप्रभा आनंदप्रभा क्रियाप्रभा इत्येवं रूपाः प्रभाः संभवंतीत्युक्तिश्च अनुपपन्ना । "स्वाभाविकी ज्ञानबलक्रिया चेत्यादि श्रुत्या" (श्वेताश्व अ. ६, मं ८) ईश्वरज्ञानादीनां अनन्याधीनत्वरूपस्वाभाविकत्वस्य प्रतिपन्नत्वात् ।

किं च ईश्वरानंदप्रभैव पुरुषेषु वैषयिकसुखरूपेण अभिव्यज्यते इत्यनुपपन्नम् । वैषयिकसुखस्य ततो भिन्नत्वात् । एष ह्येवानंदयातीत्यादिश्रुत्या ईश्वरहेतुकानंदांतरोक्तेश्च । न च एतस्यैव आनंदस्य अन्यानि भूतानि मात्रामुपजीवंति । 'रसंह्येवायं लब्ध्वा आनंदीभवति' (तै. उ. ब्रं. वल्ली. ७ अनुवाकः) इत्यादि श्रुत्यंतरपर्यालोचनया ब्रह्मानंदस्यैव वैषयिकानंदरूपत्वं सिध्यतीति युक्तम् । तथासति 'परीक्ष्य लोकान्, कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः (प्र. मुं. मं. १२) कृतेन तद्यथेह कर्मचितो लोकः क्षीयते । एवमेवामुत्र पुण्यचितो लोकः क्षीयते । "अंतवत्तु फलं तेषां तद्भवत्यल्पमेधसां" ( ) इत्यादि श्रुतिस्मृतिभिः वैषयिकानंदानित्यत्वप्रतिपादनपूर्वकं तत्र वैराग्यप्रतिपादनानुपपत्तेः । लौकिकवैदिकतत्तत्सामग्र्यधीनानां तरतमभावापन्नानां वैषयिकसुखानां ईश्वरानंदरूपत्वाभ्युपगमायोगाच्च । न च तदभिव्यक्त्यर्थं सामग्रीकल्पनमिति युक्तम् । तथासति घटादावपि सामग्र्याः अभिव्यक्त्यर्थत्वापत्तेः । तथाचोत्पत्तिः क्वापि न सिध्येत् । वैषायिकदुःखस्य सामग्रीजन्यत्ववत् तथाविधसुखस्यापि सामग्रीजन्यत्वाश्यंभावाच्च ।

एतस्यैव आनंदस्य अन्यानि भूतानि मात्रामुपजीवंति इत्यादि श्रुतिस्तु विषयजन्यानंदेषु ब्रह्मानंदादत्यंतवैलक्षण्यप्रतिपादनपरा । तदेकदेशत्वं च भेदेप्युपपन्नमिति न कश्चिद्दोषः । एतेन ज्ञानप्रभातः सत्वं क्रियाप्रभातो रजः वाक्शक्तितः तमश्च जायते । एतेषां च मनोमयादयोऽधिष्ठातारः इति निरस्तम् । "सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः" (भगी. अ. १४, श्लो. ५) इति सत्त्वादीनां प्रकृतिजन्यत्वाव-

गमात्। न च ज्ञानप्रभादीनां सत्त्वादिकं प्रति निमित्तत्वं प्रकृतेः तदुपादानत्वमिति वाच्यम्। इष्टापत्तेः। अस्माभिरपि ईश्वरज्ञानादीनां सत्त्वाद्युत्पत्तिनिमित्तत्वोपगमात्। किं च सत्त्वादीनां मनोमयादयोऽधिष्ठातार इत्यनुपपन्नम्। मनोमयादीनां सत्त्वादिगुणकप्रधानकार्यतया तदधिष्ठातृत्वायोगात्। मनोमयादिशब्देन विष्णूरुद्रोब्रह्मा च विवक्षितः इति चेत् तथा विवक्षायां कारणाभावात्। विष्णोः सत्त्वप्रेरकत्वस्य ब्रह्मणि रजःप्रेरकत्वस्य च श्रुतिस्मृतिसिद्धत्वात् तथा विवक्षेति चेत् अस्तु तावदेवम्। तथापि तेषां मनोमयादिशब्दवाच्यत्वे प्रमाणाभावात्। न च सप्तान्नब्राह्मणे अयमात्मा वाङ्मयो मनोमय इति परमात्मनः त्रैविध्यस्योक्तत्वात् ब्रह्मविष्णुरुद्ररूपेणैव तत् त्रैविध्यस्य श्रुत्यंतरसिद्धत्वात् मनोमयादिशब्देन तेषामेव ग्रहणमिति वाच्यम्। एतदर्थस्यापि अस्मन्मताविरुद्धत्वात्। विष्णोः सत्त्वमात्रप्रवर्तकत्वं तवानिष्टमिति चेत् न सत्त्वस्यैष प्रवर्तकः इति सर्वप्रवर्तकेऽपि तस्मिन्नसाधारण्येन सत्त्वप्रवर्तकत्वस्यापि प्रतिपन्नतया अस्मन्मताविरोधात्। यत्तु "ईश्वरोऽव्याकृतप्राणभूतैः सिंधुरिवोर्मिभिः। यत्प्रनृत्यादिवाभाति तस्मै सद्ब्रह्मणे नमः" इति कात्यायनकारिकोक्तं सर्वप्रक्रियामूलमिति तन्न। ईश्वराव्याकृतादीनां ब्रह्मलिंगोपकरणत्वप्रतिपादनेन तद्विकाररूपत्वाप्रतिपादनात्। तत्रत्येश्वरशब्दस्य 'तमीश्वराणां परमं महेश्वरं' इत्यत्रेव संकुचितेश्वरपरत्वाभ्युपगमात्। तस्मात् ब्रह्मण एव वियदादिनानाविधपरिणामभागित्वं स्वभावत एव सुरनरतिर्यक्स्थावरनारकिस्वर्गापवर्गिचेतनात्मकत्वं तद्वैलक्ष्यण्यं चेति यादवप्रकाशमतं न प्रेक्षावदुपादेयमिति स्थितिः॥

एतेन भास्करमतमपि निरस्तं वेदितव्यम्। इत्थं हि तन्मतप्रक्रिया— सदादिशब्दवाच्यं ब्रह्म। तच्च सांशद्वयात्मकम्। ईश्वरांशः उपाध्यंशश्चेति। तत्रेश्वरांशः सदा सर्वज्ञः सर्वशक्त्युपेतश्च। उपाध्यंशस्तु प्रकृत्यादिविभागवान् नित्योऽचेतनरूपो तादृशोपाधिपरिणामविशेषा

वच्छिन्ना ईश्वरांशा जीवनामानः संचरंति । तेषां च 'तत्त्वमसि' (छां. अ. ६-८-७) 'अयमात्मा ब्रह्मे' (बृ. उ. ४-४-५) त्यादिवेदांतप्रतिपन्नैक्य-योगबलेनोपाधिसंश्लेषापगमे सति "घटध्वंसे घठाकाशो न भिन्नो नभसो यथे" त्यादिमुक्तविषयस्मृत्यनुसारेण तादृशभेदो नावतिष्ठते। एवं च जीवेश्वरयोः ऐक्यं स्वाभाविकं भेदस्त्वौपाधिकः, अंशभूतयोः ईश्वरो-पाध्योः उपाध्यंशानां च परस्परं च भेदोऽभेदश्च स्वाभाविक इति। तदसत्। ब्रह्मणो निरंशत्वस्योपपादितत्वात्। जीवेश्वरभेदौपाधिकत्वस्य निरस्तत्वाच्च। एतावांस्तु विशेषः। शंकरमते भेदो मिथ्याभूतोपाधि-कृतः। भास्करमते तु सः सत्योपाधिकृत इति।

किं च ईश्वरांशोपाध्यंशयोः कथमभेदः। एकस्य सर्वज्ञत्वात्। अन्यस्याचेतनत्वात्। न हि चेतनाचेतनयोः ऐक्यमुपपद्यते। भेदोप्यंगी-क्रियते इति चेत्। किमिदम्। कर्णे पृष्टः कटीं चालयसि। विरुद्धयोः कथमभेदः इति पृष्टे भेदोप्यंगीकृत इति उत्तरस्य व्यधिकरणत्वात्। तस्मान्मोक्षेऽपि जीवेश्वरभेदस्य प्रतिपन्नत्वात् औपाधिकभेदवादो अनुपपन्न इति।

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां श्रीमत्सुरेन्द्रतीर्थपूज्यपादानां-शिष्येण सर्वतन्त्रस्वतन्त्रेण विजयीन्द्रभिक्षुणा विरचिते सर्वसिद्धांत-सारासारविवेचने यादवभास्करमतभङ्गो नाम नवमः परिच्छेदः ॥

---

॥ श्रीः ॥

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

अधुनानन्दतीर्थीयप्रक्रिया हृदयङ्गमा । श्रुतिस्मृतिपुराणादिसिद्धा संक्षिप्य वर्ण्यते ॥

तत्रादौ तत्वं निरूप्यते । अनारोपितं तत्वम् । प्रमितिविषय इति यावत् । एवञ्च तस्य भावस्तत्वमित्यादि खण्डनानवकाशः । शुक्तिकारजतादिकञ्च न तत्वम् । आरोपितत्वात् । शुक्तिकादौ आरोपितं रजतादिकं अन्यत्र सदिति चेन्न । अत्यन्तासदेव रजतादिकं दोषवशात् शुक्तिकादावारोप्यत इत्यङ्गीकारात् । अन्यथाख्यातिवादेऽपि यदंशे ज्ञानस्य भ्रमत्वं तदंशे तस्यासद्विषयत्वस्य दुर्वारत्वात् । सदुपरागेणासतोऽपि भानमित्यङ्गीकाराच्च । तस्मादनारोपितं तत्वमित्यङ्गीकर्तव्यम् ।

तच्च द्विविधम् । स्वतन्त्रमस्वतन्त्रं चेति । स्वरूपप्रमितिप्रवृत्तिलक्षणसत्तात्रैविध्ये यत्परं नापेक्षते तत्स्वतन्त्रम् । तत्र यत्परापेक्षं तदस्वतन्त्रम् ।

न च तत्वमेव नास्तीति शंक्यम् । प्रत्यक्षादिविरोधात् । न च प्रत्यक्षादेः भ्रमत्वम् । बाधकाभावात् । निरधिष्ठानभ्रमस्य निरवधिकबाधस्य चादर्शनेन चायोगाच्च । नास्त्येव तत्वमित्यस्यार्थस्य प्रमितत्वाप्रमितत्वाभ्यां व्याहतत्वाच्च । यदि चैकमेव तत्वं तदा भेदोपलम्भविरोधः । यदि च स्वतन्त्रमेव तत्वं तदा पारतन्त्र्यप्रतीतिविरोधः । नित्यसुखादिप्रसङ्गश्च । यदि च परतन्त्रमेव तत्वं भवेत्तदानवस्थितेरसम्भवाच्च न कस्यापि सत्तादिकं स्यात् । आगमविरोधश्च भवेत् । तस्मात् स्वतन्त्रमस्वतन्त्रं चेति तत्वद्वैविध्यं दुर्वारम् ।

ननु प्रथमं भावाभावतया चेतनाचेतनतया नित्यानित्यतया वा तत्वं विभज्यताम् । न तूक्तविधया इति चेत् । न । स्वतन्त्रमस्वतन्त्रं

चेति तत्वं द्विविधमिति विभागस्य सप्रयोजनत्वात् । परतन्त्रप्रमेयं स्वतन्त्रप्रमेयायत्ततया विदितं हि निःश्रेयसाय भवति । अन्यथा गङ्गा-वालुकादिपरिगणनवदिदं तत्वपरिगणनमपार्थकं स्यात् । किञ्च तत्वं द्विविधम् । भावोऽभावश्च । भावोऽपि द्विविधः । नित्योऽनित्यश्च । नित्योऽपि द्विविधः । चेतनोऽचेतनश्च । चेतनोऽपि द्विविधः । स्वतन्त्रोऽस्वतन्त्रश्चेत्येवमाकारेण तत्वविभागे भगवतः प्राधान्येन प्रतिपत्तिर्न स्यात् । भगवद्व्यतिरिक्तस्य सर्वस्यास्वातन्त्र्यप्रतिपत्तिश्च न भवेत् । अतः स्वतन्त्र-मस्वतन्त्रं चेत्येव तत्वविभागः कार्यः ।

नन्वेवं तत्वविभागे स्वतन्त्रतत्वस्य भावत्वादिकमविदितं स्यादिति चेत् । न । स्वातन्त्र्यज्ञानस्येव भावत्वादिज्ञानस्य पुरुषार्थोपयोगित्वा-भावेन दोषाभावादस्वतन्त्रतत्वस्यैव भावत्वचेतनत्वादिकमित्यर्थस्या-विवक्षितत्वेन विरोधाभावाच्च । तत्पक्षेऽप्यभावादीनां नित्यत्वाद्यनुक्ते-स्तुल्यत्वाच्च । अतः स्वतन्त्रमस्वतन्त्रं चेति तत्वविभागे न किञ्चिद्बाधकम् ।

तत्र स्वतन्त्रतत्वं भगवान्विष्णुरेव नान्यः । तथा च श्रुतिः । 'न तस्येशे कश्चन' (महानारायणोपनिषत् खं. १, मं. १०) । 'न चास्य कश्चित् जनिता न चाधिपः' (श्वेताश्वतरोपनिषत्—अ. ६, मं. ९) इत्यादिका ।

ननु जगज्जन्मादिकारणं ब्रह्मैव हि स्वतन्त्रं तत्वम् । तत्कथमुच्यते स्वतन्त्रतत्वं विष्णुरिति । सत्यम् । विष्णोरेव परब्रह्मत्वात् । तथा च श्रुतिस्मृतयः । कारणरूपमेकाकारं परं ब्रह्म शोकमोहविनिर्मुक्तं विष्णुं ध्यायन्नासीदिति । 'नारायणः परं ब्रह्म' (महानारायणोपनिषत्—खण्ड ११, मं. ४) ब्रह्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यते' । इति । यथा च विष्णोरेव निखिलजगज्जन्मादिकारणत्वेन परब्रह्मत्वं, न शिवादेः तथोक्तं पाशुपतमतनिराकरणे । अतो विष्णुरेव स्वतन्त्रतत्वम् ।

तद्व्यतिरिक्तं सर्वमस्वतन्त्रम् । तच्च द्विविधम् । भावरूपं अभाव-रूपं चेति । यद्वस्तु प्रथमप्रतीतौ अस्तीत्युपलभ्यते स भावः । यच्च

प्रथमप्रतीतौ नास्तीति प्रतीयते सोऽभावः । भावाभावयोः स्वरूपेण विधिनिषेधरूपत्वात् । रूपांतरेण तु भावाभावयोर्निषेधविधिरूपत्वम् । तत्रापातजायां संविदि स्वरूपमेव भासते । द्वितीयादिप्रतीतौ तु रूपांतरम् । कार्यगम्यत्वात् सामग्रीभेदस्य । तथा च प्रतीतिः । 'अस्त्यत्र घटः स न शुक्ल' इति । एवं 'नास्त्यत्र घटोऽस्ति घटाभाव' इति च । नच अभावस्यैवाभावात् अयं विभागो न युक्त इति वाच्यम् । भावस्येव तस्याप्यबाधितप्रत्यक्षादिप्रमाणसिद्धत्वात् । घटाभावो घटाभाववति भूतले किं सम्बध्यते, किं वा घटवति । नाद्यः । आत्माश्रयादिप्रसंगात् । न द्वितीयः । विरोधादित्याक्षेपस्यापि भावपदार्थमात्रेऽपि संभवेन भावपदार्थमात्रविलोपप्रसंगाच्च । तस्माद्भावाभावात्मकतया अस्वतन्त्रतत्वविभागकरणं युक्तम् । तत्राभावस्त्रिविधः । प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावश्चेति । उत्तरैकावधिरभावः प्रागभावः पूर्वैकावधिरभावः प्रध्वंसाभावः । निरवधिकाभावोऽत्यन्ताभावस्त्रैकालिकोऽभाव इति यावत् । अन्योन्याभावस्तु भेदात्मा । स च तत्तद्वस्तुस्वरूप एव । तदतिरेके प्रमाणाभावात् । तदुक्तम्—भावाभावस्वरूपत्वात् नान्योन्याभावता पृथक् । इति । न चैवं प्रागभावादीनामप्यपलापः स्यादिति शंक्यम् । तेषामनन्यथासिद्धप्रमाणसिद्धत्वेन दुरपह्नवत्वात् । तस्मात् त्रिविध एवाभावः ।

एवं भावोऽपि द्विविधः चेतनोऽचेतनश्चेति । 'चेतयते' इति व्युत्पत्त्या चेतनशब्देनात्ममात्रमुच्यते । अनेवंविधोऽचेतनो जडवर्गः । तत्र चेतनोऽपि द्विविधः । दुःखस्पृष्टस्तदस्पृष्टश्चेति । कदाचित् दुःखसंबन्धवान् दुःखस्पृष्टः । सर्वदा दुःखसंबन्धरहितो दुःखास्पृष्टः । न च दुःखादीनां कल्पितत्वेन दुःखस्पृष्टमेव नेति वाच्यम् । दुःखादीनां कल्पितत्वेऽपि दुःखसंबन्धतद्राहित्याभ्यां जीवेश्वरविभागस्य सर्वैरप्यभ्युपगन्तव्यत्वात् । त्वयापि व्यावहारिकमर्यादाया अभ्युपगतत्वाच्च । दुःखादीनां साक्ष्यादिसिद्धत्वेन कल्पितत्वोक्तेरयोगाच्च । नचेश्वरव्यतिरेकेण

कश्चिदपि सदा दुःखसंबन्धरहितो नेति शंक्यम् । लक्ष्म्या एव तथाविधायाः सत्त्वात् । न च तस्या अपि कदाचित् दुःखसंबन्धोऽस्तीति शंक्यम् । विष्णोरिव तस्या अपि सर्वदुःखराहित्यस्य श्रुत्यादिप्रमाणसिद्धत्वात् । तथा च श्रुतिः—'अस्येशाना जगतो विष्णुपत्नी'ति । न हि दुःखसंबन्धे तस्या जगदीशानत्वं संभवति । न चानन्तगरुडविष्वक्सेनादयोऽपि सर्वदा दुःखसंबन्धरहिता इति वाच्यम् । तेषां तथात्वे प्रमाणाभावात् । प्रत्युत तेषु कदाचिद्दुःखसंबन्धस्य पुराणेतिहासादिप्रतिपन्नत्वाच्च । न च नित्यवैकुण्ठलोकमङ्गीकुर्वद्भिर्नारायणपरिवारभूतानामनन्तगरुडादीनां नित्यमुक्तत्वमङ्गीकरणीयम् । अन्यथा नारायणस्य अनंतगरुडादिपरिवारराहित्यमपि कदाचित्स्यादिति वाच्यम् । तेषां प्रवाहानादित्वाभ्युपगमेनोक्तदोषाभावात् । तस्मात् लक्ष्मीरेव ईश्वरवन्नित्यं दुःखास्पृष्टा तद्भिन्नाः सर्वेऽपि चेतना दुःखस्पृष्टा इत्येव तत्वम् ।

ते च द्विविधाः । दुःखाद्विमुक्ता वर्तमानदुःखाश्चेति । तत्र दुःखाद्विमुक्ताः पञ्चविधाः । देवाः ऋषयः पितरश्चक्रवर्तिनो मनुष्योत्तमा इति । गन्धर्वादीनामुक्तेष्वेवांतर्भावेन न प्रमाणांतरविरोधः ।

वर्तमानदुःखा अपि द्विविधाः । मुक्तियोग्यास्तदयोग्याश्च इति । मुक्तियोग्या अपि दुःखविमुक्तवत् पञ्चविधाः । देवाः ऋषयः पितरश्चक्रवर्तिनो मनुष्योत्तमा इति । मुक्त्ययोग्याश्च द्विविधाः । नित्यसंसारिणः तमोयोग्याश्चेति । न च नित्यसंसारिणो न सन्तीति युक्तम् । (तेषां) संसारप्रवाहाविच्छेदस्य श्रुतिस्मृत्यादिसिद्धत्वात् । तथा च श्रुतिस्मृती —'एषोऽश्वत्थः सनातनः' (कठ.) 'अश्वत्थं प्राहुरव्ययमिति (भ.गी. अ. १५, श्लो. १) । न ह्यश्वत्थशब्दितस्य संसारस्य सदातनत्वमव्ययत्वं च प्रवाहतो विच्छेदे संभवति । तमोयोग्याश्च– 'मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्' इत्यादिभगवद्वचनसिद्धाः दैत्या रक्षांसि पिशाचा मनुष्याधमाश्चे'ति । तेऽपि चतुर्विधा अपि प्रत्येकं द्विविधाः । प्राप्ततमसः प्राप्तव्यतमसश्चेति । एवं चेतनविभागो विस्तरेणोपपादितः ।

अथ अचेतनविभागस्तु क्रियते। अचेतनं तावत् त्रिविधम् । नित्यं नित्यानित्यं अनित्यं चेति । नच सर्वस्य क्षणिकत्वात् नित्यमेव नास्तीति शंक्यम् । क्षणिकत्वस्य प्रबलप्रत्यभिज्ञाविरुद्धत्वेनानङ्गीकर्तव्यत्वात् । नचासौ भ्रांतिः । बाधकाभावात् । नच 'यत् सत् तत् क्षणिकमिति व्याप्तिर्बाधिका।' तथाविधव्याप्तेरेवाभावात् । नच दीपज्वालादौ व्याप्तिः सिद्धेति शंक्यम् । तथापि त्वदभिमतक्षणिकत्वस्यासम्प्रतिपत्तेः । 'ध्रुवा द्यौः ध्रुवा पृथिवी ध्रुवासः पर्वता इमे । ध्रुवं विश्वमिदं जगत् । ध्रुवो राजा विशामयम्' इत्यादिश्रुत्या सर्वपदार्थानामक्षणिकत्वावेदनाच्च । क्षणिकत्वं हि तवोत्पत्तिक्षणाव्यवहितोत्तरक्षणवृत्तिध्वंसप्रतियोगित्वमेवाभिमतम् । न चैतादृशं क्षणिकत्वं कस्यापि दृष्टचरम् । उत्पत्त्यनन्तरं स्थित एव ध्वंससामग्रीसंपत्तौ ध्वंसप्रतियोगित्वानुभवात् । ज्वालादौ प्रतिक्षणं परिमाणभेददर्शनेन क्षणिकत्वाभ्युपगमेऽपि घटादौ स्थायित्वस्य सर्वानुभवसिद्धत्वेन तस्यानंगीकार्यत्वाच्च । यत्र तु ज्वालादौ तथाविधपरिमाणभेदो न दृश्यते तत्र स्थायित्वस्यैवाभ्युपगन्तव्यत्वाच्च ।

किञ्च पदार्थमात्रस्य क्षणिकत्वे घटादेः प्रत्यक्षतोऽनुपलम्भप्रसङ्गः । प्रत्यक्षस्यासम्बद्धग्राहित्वेऽतिप्रसंगात् । चक्षुरादिकं हि स्वसम्बद्धमेव घटादिकं स्वजन्यज्ञानद्वारा विषयीकरोतीत्युपेयम् । सम्बन्धश्च घटादेः क्रिया कियातो विभागः । विभागात् पूर्वदेशसंयोगनाशः उत्तरदेशसंयोगोत्पत्तिः । इति प्रणाड्या निष्पद्यत इति कृत्वा । किञ्च कृतहानादिप्रसंगेन आत्मादेर्नित्यत्वमंगीकरणीयम् । यथा चात्मादिनित्यत्वं तथोक्तं सौगतमतनिराकरणे । तस्मान्नित्यं वस्त्वंगीकरणीयम् ।

एतेन 'सर्वं नित्य'मिति सांख्यमतमपि निरस्तम् । सृष्टिप्रलयादिप्रतिपादकश्रुतिस्मृतिपुराणविरोधात् । अभिव्यक्त्यनभिव्यक्ती एव सृष्टिप्रलयाविति चेत् । अभिव्यक्तिवादस्य सांख्यमतनिराकरणप्रस्तावे निराकृतत्वात् । त्वत्पक्षे अभिव्यक्तेरपि विद्यमानत्वेन सामग्र्यास्तदर्थत्वायोगाच्चेति । तथा च नित्यमनित्यंचांगीकर्तव्यम् ।

नन्वेवमपि नित्यानित्यं नांगीकार्यम् । नित्यत्वानित्यत्वयोरेकत्रा-योगात् । अन्यथा सदसद्विलक्षणमनिर्वचनीयमिति अद्वैतरीत्या सदस-द्विलक्षणमनिर्वचनीयं किञ्चित्सिध्येत् । अन्यथा त्वयोच्यमानमस्मन्मत-दूषणमसंगतं स्यादिति चेत् । न । स्वरूपप्रयुक्तनित्यत्वस्य तत्तदवस्था-प्रयुक्तानित्यत्वस्य चैकस्य प्रमाणप्रमितत्वेन त्यागायोगात् । सदसद्विलक्षण-त्वस्य च प्रमाणाभावेनानंगीकार्यत्वाच्च । न च शुक्तिरूप्यमेव सदस-द्विलक्षणतया प्रमाणप्रतिपन्नमिति शंक्यम् । अनिर्वचनीयरजतोत्पत्तेः शंकरमतनिराकरणप्रस्तावे निराकरणात् शुक्तिकादिविषयरजतज्ञानस्य (मतांतररीत्या देशांतरगतरजतादिविषयत्वेन वा) असद्रजतविषयत्वेन उपपन्नतया सदसद्विलक्षणानिर्वचनीयरजतोत्पत्तेरनंगीकार्यत्वाच्चेति । तस्मान्नित्यवत् अनित्यवच्च नित्यानित्यस्याप्यंगीकारे न किञ्चिद्बाधकम् । तत्र नित्यत्वं नाम कूटस्थतया आद्यन्तशून्यत्वम् । तच्च वेदानां पञ्चा-शद्वर्णानां अव्याकृताकाशस्य च अंगीकर्तव्यम् । तेषामेव धर्मिग्राहकमानेन तथैव सिद्धत्वात् । यद्यपीश्वरस्य जीवानां च कूटस्थनित्यत्वमंगीकृतम् । तथाप्यत्र वेदादीनामेवेत्यनुक्तेर्न कश्चिद्दोषः । यच्च सर्वात्मना कूटस्थं न भवति नाप्यनित्यं तदुच्यते नित्यानित्यमिति । तच्च त्रेधा संभवति । उत्पत्तिमत्वेसति विनाशाभावेन, एकदेशेनोत्पत्तिविनाशौ ।*

एकदेशिनस्तदभावः । स्वरूपेणोत्पत्याद्यभावेऽपि अवस्थागमापाय-वत्वं चेति । तदेतद्विधात्रयं क्रमेण पुराणकालप्रकृतिषु दृश्यत इति । पुराणादिपौरुषेयग्रन्थस्य पुरुषैरुत्पाद्यमानक्रमवत्वेऽपि तस्य क्रमस्येश्वरबुद्धौ वेदक्रमस्येवोत्तरावधिशून्यतया प्रतीयमानत्वेन विनाशाभाव इत्यर्थः । क्षणलवाद्येकदेशैरुत्पत्तिविनाशवत्वेऽप्येकदेशवतोंऽशिनः कालस्य प्रवाहत आद्यन्तशून्यत्वेनोत्पत्तिविनाशयोरभावः । जडोपादानप्रकृतेश्च स्वरूपत उत्पत्तिविनाशयोरभावेऽपि महदाद्यात्मकत्वावस्थाविशेषेण तौ स्त इति

* इतःपरं मूलग्रन्थभागो नोपलभ्यते। अतो न्यूनतापरिहाराय तदनु-वन्धितत्प्रमेयप्रतिपादकग्रन्थभागं समायोज्य प्रकाश्यते।

तदेतद्विधात्रयमुक्तवस्तुत्रयेऽस्तीति नित्यानित्यविभागोऽपि प्रामाणिक एव। पुराणानामुत्पत्तिमत्वे "पुराणानि तदर्थानि सर्गे सर्गेऽन्यथैव तु। क्रियन्तेऽतस्त्वनित्यानि तदर्थाः पूर्वसर्गवत्" इत्यागमः प्रमाणम्। "सर्वे निमेषा जज्ञिरे" इत्याद्यागमः कालैकदेशोत्पत्तौ मानम्। प्रकृतेः स्वरूपतो जन्माद्यभावेऽपि "विकारोऽव्यक्तजन्म हि" इति प्रमाणेन महदाद्यात्मना विकार एवाव्यक्तस्य प्रकृतेर्जन्म उच्यते।

नन्वत्र यस्योत्पत्त्यादिकं तदनित्यमेव। यस्य चोत्पत्तिर्नास्ति तन्नित्यमेव। नित्यानित्यं क्वास्तीति चेन्मैवं स्यादेतदेवं यद्यंशांशिनोर्विकारविकारिणोर्वा अत्यन्तभेदः स्यात्। न चैवम्। यन्न सर्वथा कूटस्थं नाप्यनित्यमेव तदुच्यते नित्यानित्यमिति नित्यानित्यस्वरूपं प्रादर्शि।

पुराणादेः क्रमविशेषविशिष्टवर्णात्मकत्वात् विशिष्टरूपेणोत्पत्तिमत्वेपि विशेष्यभूतवर्णरूपेण तदभावान्नित्यानित्यत्वमिति। कार्यकारणयोर्भेदाभेदस्य प्रसिद्धत्वात् विशिष्टशुद्धयोश्च क्वचिदत्यन्ताभेदस्य क्वचिद्भेदाभेदस्य लाभात् (सत्वात्) पुराणादीनां वर्णादिना खण्डितत्वेन भिन्नाभिन्नतया नित्यानित्यत्वोपपत्तिरित्याशयः। तथा च पुराणादेः विशिष्टरूपेणोत्पत्तिमत्वेऽपि विशेष्यभूतवर्णरूपेण तदभावान्नित्यानित्यत्वं बोध्यम्। अनित्यं असंसृष्टं संसृष्टमिति द्विविधं मतम्। सम्यक् सृष्टं संसृष्टम्। अतथाभूतमसंसृष्टम्। तत्र चतुर्विंशतितत्वानि महदादीन्यसंसृष्टानीत्युच्यंते। तानि च महत्तत्वं, अहंकारतत्वं, बुद्धितत्वं, मनस्तत्वं, दशेन्द्रियाणि पञ्चतन्मात्राणि पञ्चभूतानि चेति। महदादीनां सूक्ष्मरूपेण नित्यानां प्रकृत्याद्यंशैरूपचयमात्रं क्रियत इति तान्यसंसृष्टानि। प्रकृतिगुणत्रयांशैः महदादीनां स्थूलरूपनिष्पत्तिरूपोपचयः संभवति। एवञ्च साक्षान्मूलरूपस्य सूक्ष्मशब्दितस्योपादानत्वात्साक्षान्नित्योपादानत्वं महदादीनामस्तीति तान्यसंसृष्टानि। ब्रह्माण्डं तद्गतं च समस्तं संसृष्टमिति संप्रकीर्तितम्। ब्रह्माण्डस्य तद्गतस्य सर्वस्यापि साक्षान्नित्योपादानकत्वाभावादनित्यांशैरप्युपचयात्सम्यक् सृष्टत्वमुक्तम्।

तार्किकास्तु महदादिस्वरूपमेव नाङ्गीकुर्वन्ति । तेषान्त्वागम-विरोधोऽपरिहार्यः । तथाहि तत्रागमः—

महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पञ्चचेन्द्रियगोचराः ॥

(इति भगवद्गीतासु)

इन्द्रियेभ्यः परा ह्यर्थाः अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिः बुद्धेरात्मा महान्परः ॥
महतः परमव्यक्तं अव्यक्तात्पुरुषःपरः ।
पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः ॥

(काठकोपनिषत्)

मानाधीना मेयसिद्धिरितिन्यायात् प्रमाणप्रमितत्वाद्भगवतः स्वतन्त्रतत्वस्य हरेः भावत्वं, चेतनत्वं, नित्यमुक्तत्वं नित्यत्वं तदतिरिक्तचेतनानामस्वतन्त्र-कोटिप्रविष्टानामपि नित्यत्वमेवमभावस्याचेतनत्वं तेष्वपि प्रागभावस्या-नादित्वे सत्यनित्यत्वं, प्रध्वंसाभावस्य सादित्वे सति नित्यत्वं अत्यन्ता-भावस्यानादिनित्यत्वं च बोध्यम् ।

यावद्वस्तुभाविनो गुणाद्याः धर्माः सर्वेऽपि स्वाश्रयद्रव्यस्वरूपभूता एव । गुणादीनां धर्मिणा द्रव्येण घटकलशवन्निर्विशेषाभेदाभावात् यथा प्रमाविषयः प्रमेयं अभिधाविषयोऽभिधेय इति बुद्ध्या विवेकः क्रियते तथा द्रव्यगुणादेरपि निर्विशेषाभेदाभावात् बुद्ध्या विवेकः क्रियते। तच्च गुणादिकं द्रव्यस्वरूपमपि यावद्वस्तुभावि खण्डितं चेति द्विविधम् । यच्च गुणादिकं यावत्कालं द्रव्यं तिष्ठति तावत्कालं तिष्ठतीत्येवमभिप्रेत्य यावद्वस्तुभावीति कथ्यते । तत्र च गुणगुणिनोः सविशेषात्यन्ताभेदः । सत्यपि द्रव्ये यच्च रूपादिकं नश्यति तत्खण्डितमिति गीयते । तत्र यत्खण्डितं गुणादिकं तत्र भेदाभेदौ प्रतिपत्तव्यौ । "खण्डितं रूपमेवात्र विकारोऽपि विकारिणः" इत्याचार्यापदिष्टरीत्या विकारविकारिणोः भेदा-भेदौ, कार्यस्योपादेयद्रव्यस्य पटादेः कारणेनोपादानेन तन्त्वादिना भेदः

ऐक्यं च विज्ञेयम् । एवं क्रियाक्रियावतोः जातिविशेषयोः, विशिष्टशुद्धयोः अंशांशिनोः यथासम्भवं भेदाभेदौ अत्यन्ताभेदश्च ज्ञातव्यः । गुणगुणिनोरत्यन्तभेद इति तार्किकाः सञ्चक्षते । तन्निर्युक्तिकत्वादश्रद्धेयम् ।

तन्तुपटयोर्भेदाभेदौ । आतानवितानात्मकास्तन्तव एव पट इत्यबाधितप्रामाणिकप्रतीतिबलात्तन्तुपटयोरभेदोऽवश्यमभ्युपगन्तव्यः । तेन सहात्यन्ताभिन्नस्य तस्मिन् सत्यप्यसत्वानुपपत्तेस्तन्तुपटयोर्भेदोऽप्यङ्गीकार्यः । न च भेदाभेदौ विरुद्धौ । प्रमाणेन तयोः सहोपलम्भे सिद्धे वैयधिकरण्यनियमोपलम्भे प्रमाणस्याभावेन विरोधस्यासिद्धेः । घटपटादौ तु घटः पटो नेत्यादिप्रत्यक्षसिद्धतया तयोः शुद्धभेदः । तथाचायावद्द्रव्यभावि गुणगुण्यादौ भेदाभेदौ यथा चूतफलश्यामत्वादेः । यावद्द्रव्यभाविगुणगुण्यादौ सविशेषाभेदः । हस्तकरादौ निर्विशेषाभेदः । क्रियाक्रियावतोर्भेदाभेदावित्युक्तं तद्यथा पटचलनयोः भेदाभेदौ । सत्यपि पटे चलनाभावात् । चेतनक्रिययोरत्यन्ताभेदः । एवं जातिव्यक्त्योरपि भेदाभेदौ । तत्र ब्राह्मणत्वपिण्डयोर्भेदाभेदौ । महापातकेन जातेरपायात् । घटत्वघटयोरत्यन्ताभेद एव । विशिष्टशुद्धयोर्विशिष्टस्य विशेष्यस्वरूपस्य च भेदाभेदौ अभेदश्चेति ज्ञातव्यम् । पर्वतस्याग्निमतश्च भेदाभेदौ पर्वतसद्भावेऽपि कदाचिदग्निमतोऽभावात् । विष्णोः सर्वज्ञस्य चात्यन्ताभेद एव । एवमंशांशिनोरत्यन्ताभेदो भेदाभेदौ च बोद्धव्यौ । तत्रैकांशेन भेदाभेदौ । एकांशापगमेऽपि अंशिनोऽवस्थानात् । सर्वैरंशैस्त्वत्यन्ताभेद एवेति । एते मिलिता वृक्षा वनं, एते गजाश्वादयो मिलिताः सेना, एते मिलितास्तन्तव एव पटः, एते खण्डपटा मिलिता महापटो नान्य इति प्रामाणिकानुभवात् ।

तन्त्वादिकारणातिरिक्तांशो नास्तीति केचन समाचक्षते । तत्प्रमाणविरुद्धम् । प्रत्यक्षत एव पटाद्यंशिनां तन्त्वाद्यतिरिक्तांशप्रतीतेः । हस्तवितस्त्याद्यवच्छेद्यानां ततो न्यूनपरिमाणेभ्यः तन्तुभ्योऽधिकपरिमाणपटाद्यातिरेकप्रतीतेः कारणातिरिक्ता अंशाः अवश्यमेवाभ्युपगन्तव्या इति ।

तदेतदस्वतन्त्रतत्वं भावाभावभेदभिन्नं जगत् परमपुरुषाधीनतयाऽवगतं सदेव पुरुषार्थोपयोगीति मुमुक्षुणा खलु परमात्मा जगदुदयादिनिमित्तत्वे-नावश्यमवगन्तव्य इति सकलसच्छास्त्राणामविप्रतिपन्नोऽर्थः ।

तदुक्तम्—

सृष्टिरक्षाहृतिज्ञाननियत्यज्ञानबन्धनान् ।
मोक्षं च विष्णुतश्चैव (तस्त्वेव) ज्ञात्वा मुक्तिर्न चान्यथा ॥ इति ॥
य एतत्परतन्त्रन्तु सर्वमेव हरेः सदा ।
वशमित्येव जानाति संसारान्मुच्यते हि सः ॥ इति च ॥

इत्थमानन्दतीर्थीयप्रक्रिया हृदयङ्गमा ।
संक्षिप्य वर्णिता प्रीत्यै भूयान्माधवमध्वयोः ॥

इति श्रीमदानन्दतीर्थीयप्रक्रियासङ्ग्रहः ।

इत्येकादशपरिच्छेदः समाप्तः ।

॥ इति शम् ॥

